TRIVANDRUM SANSKRIT SERIES.

NO. XXIV.

THE

# JÂNAKÎPARIṆAYA

OF

## CHAKRAKAVI

EDITED

BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

---

TRIVANDRUM

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1913.

---

अनन्तशयनसंस्कृतग्रन्थावलिः.

ग्रन्थाङ्कः २४.

---

# जानकीपरिणयः

चक्रकविप्रणीतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितः ।

---

स च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

---

कोळम्बाब्दाः १०८८, क्रैस्ताब्दाः १९१३.

# PREFACE.

Jânakiparinaya is a Kâvya written by Chakra Kavi. It is gathered from the portions* of the verse at the end of the sargas of this Kâvya that his parents were Ambâ and Lokanâtha-sudhî, that his son Râmachandra was well-versed in all Sâma Veda, that he was a poetic genius even from his Upanayana sacrament and his work was admired by Pândya and Chera kings and also by Nîlakantha Adhvari and that he wrote two other Kâvyas named, Rukminîparinaya and Pârvatîparinaya.

Chitraratnâkara, a work dealing with Sabdálankâra contains the following verse.

"रुक्मिणीजानकीगौरीद्रौपदीपरिणीतयः ।
कृतयो यस्य तस्यैषा कृतिश्चक्रकवेः शुभा ॥"

which shows that he has also written two more works, namely, Chitraratnâkara and Draupadîparinaya. It is probable that Nîla-kantha Adhvari referred to in this work is the same as the famous Nîlakantha Dîkshita, the author of Sivalîlârnava, Nîlakantha-vijaya and other works. Hence the author, Chakrakavi may be a contemporary of Nîlakantha Dîkshita who lived in the first half of the 17th century A. D.

---

* 'यं सूनुं जनयाम्बभूव महितः श्रीलोकनाथः सुधीः ख्यातं चक्रकविं सतीसमुदयैः सम्मानिताम्बाभिधा ।

'यत्पुत्रो भुवि वेत्ति सामनिगमं श्रीरामचन्द्रोऽखिलम्' (८ सर्गः)
'साविव्या सममेव यं श्रितवती वाग्देवता सादरम्' (३ सर्गः)
'पाण्ड्यमहीभुजा बहुमते नव्ये तदीये महाकाव्ये' (२. सर्गः)
'चेरावनीवासवश्लाघासीमनि' (४ सर्गः)
'श्रीनीलकण्ठाध्वरिश्लाघासीमनि (६ सर्गः)
'रुक्मिणीपरिणयभ्रातरि' (५ सर्गः)
'पार्वतीपरिणयभ्रातरि' (७ सर्गः)

# निवेदना ।

---

अस्य **जानकीपरिणय**नाम्नः काव्यस्य प्रणेता **अम्बा-लोकनाथ**-सुधियोः सूनुर्निखिलसामानिगमवेदिनः **श्रीरामचन्द्र**स्य पिता **चक्रकवि**र्नामेति, उपनयनात् प्रभृति कवित्वमस्य समुल्लसितमासीदिति, अस्य काव्यं पाण्ड्यभूपति-चेरावनीन्द्र-**नीलकण्ठाध्वरि**भिर्भृशं श्लाघितमिति, अनेनान्ये द्वे काव्ये **रुक्मिणीपरिणय**–**पार्वतीपरिणया**भिधाने निर्मिते इत्येतावदेतत्काव्यसर्गान्तिमपद्यांशेभ्यो* ज्ञायते ।

> "रुक्मिणीजानकीगौरीद्रौपदीपरिणीतयः ।
> कृतयो यस्य तस्यैषा कृतिश्चक्रकवेः शुभा ॥ "

इति **चित्ररत्नाकर**स्य शब्दचित्रपरस्यारम्भे कथनात् **चित्ररत्नाकर**–**द्रौपदीपरिणया**वपि **चक्रकवि**ना प्रणीतावित्यवगम्यते । अत्र परामृष्टो **नीलकण्ठाध्वरी** सुप्रसिद्धः **शिवलीलार्णव**–**नीलकण्ठविजया**दिकर्ता संभाव्यते । तेन‡ तत्समानकालोऽयं **चक्रकवि**र्भवन् क्रैस्ताब्दीयस्य सप्तदशशतकस्य पूर्वार्धे स्थित इति शक्यमुन्नेतुम् ।

---

* यं सूनुं जनयाम्बभूव महितः श्रीलोकनाथः सुधीः ख्यातं चक्रकविं सतीसमुदयैः संमानिताम्बाभिधा ।

'यत्पुत्रो भुवि वेत्ति सामनिगमं श्रीरामचन्द्रोऽखिलम्' (८ सर्गः)

'सावित्र्या सममेव यं श्रितवती वाग्देवता सादरम्' (३ सर्गः)

'पाण्ड्यमहीभुजा बहुमते नव्ये तदीये महाकाव्ये' (२ सर्गः)

'चेरावनीवासवश्लाघासीमनि' (४ सर्गः)

'श्रीनीलकण्ठाध्वरिश्लाघासीमनि' (६ सर्गः)

'रुक्मिणीपरिणयभ्रातरि' (५ सर्गः)

'पार्वतीपरिणयभ्रातरि' (७ सर्गः)

‡ नीलकण्ठाध्वरिणस्तु कालः **शिवलीलार्णव**स्य निवेदनायां द्रष्टव्यः ।

अस्य काव्यस्य शुद्ध एक आदर्शः शङ्करनारायणपिल्ल (नालेकाड्डु) महाशयादासादितः । तदाधारेणास्य मुद्रणं निर्वर्तितम् ।

अनन्तशयनम्. त. गणपतिशास्त्री.

॥ श्रीः ॥

चक्रकविप्रणीतः

# जानकीपरिणयः ।

---

सन्ततं दृढसंसक्तं वन्दे द्वन्द्वं चिरन्तनम् ।
आदर्शे केवलं पश्यदाननाभां परस्परम् ॥ १ ॥

ऐक्यं भजेते भुवनेष्वर्थतः शब्दतश्च यौ ।
भूयास्तामनिशं तौ मे भूयसे श्रेयसे शिवौ ॥ २ ॥

गजरत्नं चिरत्नं तदद्भुतं श्रेयसेऽस्तु सत् ।
*पञ्चाननो लालयति **क्षोणीभृद्भूगुहाश्रयः ॥ ३ ॥

क्षमाभिनन्दितौ श्यामावनसूनाविभूषितौ ।
जनकानन्दनौ वन्दे जानकीरघुनन्दनौ ॥ ४ ॥

मुखेषु वेधसो वाणीं विहरन्तीमुपास्महे ।
विडम्बयन्तीमब्जेषु क्रीडन्तीं कमलालयाम् ॥ ५ ॥

वन्दे कविं तं प्रथमं निपतन्तीं त्रिविष्टपात् ।
भागीरथीमिव हरो भारतीं वहति स्म यः ॥ ६ ॥

भजे पराशरसुतं पञ्चमं वदनं विधेः ।
उदभून्निगमो यस्मात् पञ्चमो भारतात्मना ॥ ७ ॥

---

* पञ्चाननः शिवः सिंहश्च । ** पार्वतीस्कन्दयोराश्रयः, अथच पर्वतभूमिर्गुहाश्रयो यस्य सः ।

कलये कालिदासं तं कविराजिशिखामणिम् ।
यतन्तेऽद्यापि यन्मार्गमनुसर्तुं कवीश्वराः ॥ ८ ॥

सिताजनिष्ट हसिता साक्षाद् द्राक्षा पराजिता ।
माघस्यानल्परसया वाचा मोचा च धिक्कृता ॥ ९ ॥

भोजो जयति भेजे यद्दर्शनात् कवितां जनः ।
श्रमं विनैव काव्येषु देवतोपासनं विना ॥ १० ॥

मधुजित्पदजातापि जिता भागीरथी ध्रुवम् ।
भारत्या भवभूतेस्तत् सभङ्गाद्यापि दृश्यते ॥ ११ ॥

सारस्वतसुधासारसन्तर्पितबुधावलिः ।
मुरारिसमतां धत्ते मुरारिः कविकेसरी ॥ १२ ॥

माधुर्यधुर्या बाणस्य भारती भासते यया ।
सम्भावितो ‡नीरतया मरन्दो मन्दतां दधौ ॥ १३ ॥

श्रीलोकनाथं जनकं भजे बुधशिखामणिम् ।
असङ्ख्योऽपि जनो येन §सङ्ख्यावानाहितोऽद्भुतम् ॥

श्रीरामचन्द्रं श्रीकण्ठभक्तं वन्दे तमग्रजम् ।
यत्सकाशान्मया सेयं संप्राप्ता साहितीसुधा ॥ १५ ॥

अग्रेसरं कवीन्द्राणामग्रजं तं पतञ्जलिम् ।
भजे यन्मुखचन्द्रस्य शारदा चन्द्रिकायते ॥ १६ ॥

गुणं खलजनः सूक्तेर्दोषत्वेनाभिपश्यति ।
सौरं ध्वान्ततयालोकमुलूको हि विलोकते ॥ १७ ॥

---

‡ नीरतया जलत्वेन निर्गतरेफत्वेन च । § पण्डितः ससंख्यश्च ।

चकार प्रतिसृष्टिं किं वाचोऽपि कुशिकात्मजः ।
अनिशं दुष्कविमुखे वाग्रूपा वर्तते हि सा ॥ १८ ॥

निर्गता दुष्कविमुखाद् वाणी दोषकलङ्किता ।
विशदीक्रियते भूयः सभ्यानां हसितैः सितैः ॥ १९ ॥

चिकीर्षति प्रबन्धं यो विना व्याकरणे श्रमम् ।
स शक्नोति स्रजं बन्धुं पुष्पसम्पादनं विना ॥ २० ॥

भ्रूविक्रियां शिरःकम्पं सस्मितं च स्तवं मुहुः ।
अज्ञः करोति किं ब्रूमः कवेः सूक्तिष्वभिज्ञवत् ॥ २१ ॥

प्राणान् जनानां हरतः प्रबन्धैः परुषैर्निजैः ।
कविपाशानहं मन्ये कालपाशान् दुरासदान् ॥ २२ ॥

कविम्मन्यपुरोभागिशुष्कतार्किककर्करे ।
जगत्यस्मिन् मृदुपदा कथं वाणि! चरिष्यसि ॥ २३ ॥

वाल्मीकेरिव वाचं मे वाचमङ्गीकरिष्यति ।
रामः क्षौममिवावस्त कदाचिद् वल्कलं न किम् ॥ २४ ॥

लसद्रामचरित्रा मे वागपि स्यात् सतां मुदे ।
धृतमुक्ताफला शुक्तिर्न किमाद्रियते जनैः ॥ २५ ॥

अस्ति भूषा भुवो गन्धहस्तिवाजिविराजिता ।
अयोध्या नाम नगरी श्रियो नर्तनरङ्गभूः ॥ २६ ॥

चन्द्राश्मसालगलितैर्नीरैर्ज्यौत्स्नीषु पूरिता ।
प्रतीक्षते यत्परिखा न घनान् न च सारिणीः‡ ॥ २७ ॥

---

‡ कुल्याः ।

गन्धवाहाः स्वनामार्धं हित्वा वाहाश्चकासति ।
पुरस्कुर्वन्ति तैस्त्यक्तं यत्र गन्धपदं गजाः ॥ २८ ॥

यदारामद्रुमा भान्ति व्याधूता मलयानिलैः ।
उदङ्मुखाश्चैत्ररथं जेतुं संप्रस्थिता इव ॥ २९ ॥

यत्र यूनोः सदाश्लेषाद् व्यक्तेः कस्याः कुचाविमौ ।
इति संशयमुष्णतुरसोढालिङ्गनोऽहरत् ॥ ३० ॥

यत्र कान्ता रतिश्रान्ताः सौधेपूच्चेष्वनुक्षपम् ।
शयानाश्चन्द्रिकां सान्द्रां सेवन्तेऽनन्यसेविताम् ॥ ३१ ॥

स्थिरा यत्र वसन्तीति श्रियोऽतिचपला अपि ।
विद्युतो वनिता भूत्वा वर्तन्ते गतचापलाः ॥ ३२ ॥

क्षौमाणि सुभ्रुवां नानारत्नवेश्मजरश्मिभिः ।
लिप्तानि चित्रपटवद् भासन्ते यत्र सन्ततम् ॥ ३३ ॥

आतपेऽर्कशिलाश्मन्ते* विन्यस्तेऽग्निं विमुञ्चति ।
यत्पुरन्ध्रीजनास्तस्मिन् पचन्त्यन्नमनिन्धनम् ॥ ३४ ॥

मरुताभिहता स्वर्गगङ्गाम्भःकणवर्षिणा ।
शीतार्तेवोच्चसौधस्था पताका यत्र कम्पते ॥ ३५ ॥

सौधेषु यत्र नारीणां वीक्ष्य पुम्भावसंभ्रमान् ।
अभ्यस्यन्तीव तटितस्तानद्यापि चलाचलाः ॥ ३६ ॥

दिवानिशं चुम्ब्यमानाः कान्तैर्यत्प्रमदाधराः ।
हेमन्तसमये यान्ति विश्रान्तिमुदितव्रणाः ॥ ३७ ॥

---

* सूर्यकान्तचुल्ल्याम् ।

सकुण्डलैः कञ्चुकिभिः स्फुरन्मणिविभूषितैः ।
भुजङ्गैर्भोगसंपन्नैर्भाति भोगवतीव या ॥ ३८ ॥

सदानिमिषसंपर्कधन्यैरुत्कलिकान्वितैः ।
भासतेऽप्सरसां सङ्घैः पुरन्दरपुरीव या ॥ ३९ ॥

यत्र कालागुरुभवैर्धूपैरुच्चलितैः सदा ।
आहितां श्यामतामभ्रमद्यापि न विमुञ्चति ॥ ४० ॥

प्रभा दिक्षु प्रसर्पन्तीर्यत्र हीराश्मवेश्मनाम् ।
चञ्च्वञ्चलैर्जिघृक्षन्ते चकोराश्चन्द्रिकाधिया ॥ ४१ ॥

दैवज्ञैरपि दुर्ज्ञेयमर्केन्दूडुपथान्तरम् ।
उच्चसौधाग्रमारूढा निश्चिन्वन्ति यदङ्गनाः ॥ ४२ ॥

यज्जनालोकनवतां लुब्धः कल्पकपादपः ।
पामरो वासवगुरुर्दरिद्रो निधिनायकः ॥ ४३ ॥

नूतनोऽपि जनो गन्धान् घ्रायं घ्रायं प्रसर्पतः ।
यत्र गन्धापणं याति यथालिः पुष्पितं द्रुमम् ॥ ४४ ॥

शङ्के यत्सिन्धुरेन्द्राणां पुलाका‡ नीलनीरदाः ।
अतो मरुद्भिर्नीतास्ते भ्रमन्ति हरिदन्तरे ॥ ४५ ॥

अध्यतिष्ठदयोध्यां तां राजा दशरथः पुरीम् ।
अलकामिव यक्षेशो मघवेवामरावतीम् ॥ ४६ ॥

क्षिप्तक्षीराब्धिकल्लोलशरच्चन्द्रमरीचिभिः ।
यत्कीर्तिपूरकर्पूरैरासीदामोदितं जगत् ॥ ४७ ॥

---

‡ पुलाकास्तुच्छधान्यानि बुसप्रायाणि पवनहार्याणि । सारधान्यस्थानीयत्वं तु गजानां गम्यम् ।

उदिते सति यद्बाहाशौर्यसूर्ये रणाङ्गणे ।
अजायत गतच्छायं तत्क्षणाद् राजमण्डलम् ॥ ४८ ॥

प्रतापवन्तं सद्धेतिं तरसाहितपावकम् ।
महाहवविधिज्ञो यश्चक्रे प्राज्यसमिद्धुतम् ॥ ४९ ॥

हता येन स्थिताः स्वर्गे द्विषो यं वीक्ष्य धन्विनम् ।
असुरान् हन्तुमायान्तं त्रासं तत्रापि भेजिरे ॥ ५० ॥

असेवन्त हता येन देवभूयं गता द्विषः ।
हरेरर्धासनस्थं यं स्वपुत्राणां हितैषिणः ॥ ५१ ॥

अहर्निशं दानजलैररिक्तो यत्करोऽभवत् ।
तद्वर्तिरेखामत्स्यानामन्यथा जीवनं कुतः ॥ ५२ ॥

पर्वताः सागरत्वेन पर्वतत्वेन सागराः ।
यस्योन्नतत्वे गाम्भीर्ये चिन्तिते सति निश्चिताः ॥ ५३ ॥

पञ्चशाखान्वितं यस्य भुजाकल्पकभूरुहम् ।
अधिरूढा क्षितिलता फलानि समदर्शयत् ॥ ५४ ॥

यः पुमर्थानतन्द्रीको यथाकालमसेवत ।
सर्गरक्षान्तसमयेष्वात्मा मायागुणानिव ॥ ५५ ॥

एकमेव जयन् कामं क्रोधेनाभूज्जितो हरः ।
जिगाय यः काममुखान् वीरः षडपि विद्विषः ॥ ५६ ॥

साम्नोऽसाध्येष्वभूद् दानमसाध्येषु तयोर्भिदा ।
तेषामसाध्येषु पुनः प्रयुक्तं तेन दण्डनम् ॥ ५७ ॥

अजयद् द्विषतः स्कन्दः शक्तिमेकां वहन्नपि ।
किमद्भुतं जिगायेति यः शक्तित्रयवान् द्विषः ॥ ५८ ॥

स कोसलेश्वरसुतां तनयां केकयस्य च ।
पुत्रीं च मगधेन्द्रस्य सपत्नीरकरोद् भुवः ॥ ५९ ॥

अन्याश्च वरसौजन्या धन्या राजन्यकन्यकाः ।
पर्यग्रहीत् स माधुर्यधुर्याः सौन्दर्यशालिनीः ॥ ६० ॥

धरणीधारणे तस्य मन्त्रिणोऽष्टौ महीपतेः ।
सहायभावमभजन् भोगीन्द्रस्येव दिग्गजाः ॥ ६१ ॥

ऋषिदेवऋणान्मुक्तो ब्रह्मचर्येण यागतः ।
प्रजाभिधधनालाभाद् बद्धः पितृऋणेन सः ॥ ६२ ॥

पुत्रार्थं भूपतौ तस्मिन्नश्वमेधं चिकीर्षति ।
सुमन्त्रो मन्त्रितिलको मिथस्तमिदमब्रवीत् ॥ ६३ ॥

ऋश्यशृङ्गप्रभावात् ते भविष्यन्ति सुता इति ।
सनत्कुमारो भगवानब्रवीत् सुरसंसदि ॥ ६४ ॥

राजन्नागमनात् तस्य सन्तानं ते भविष्यति ।
पुराङ्गविषयस्येव वर्षं सन्तापवारणम् ॥ ६५ ॥

इति तद्भाषितं श्रुत्वा रोमपादान्तिकं गतः ।
अयोध्यामानयामास शान्ताकान्तं धरापतिः ॥ ६६ ॥

यज्ञशाला विशालाभूत् सरयूवाहिनीतटे ।
सम्भाराः सम्भृता मुक्तो हयश्च सपुरोहितः ॥ ६७ ॥

ऋश्यशृङ्गं पुरस्कृत्य वसिष्ठप्रमुखा द्विजाः ।
प्रावर्तन्त क्रतुं कर्तुं तुरङ्गे पुनरागते ॥ ६८ ॥

बिभ्रच्चलशिखाजिह्वां धूमश्मश्रुचयं दधत् ।
बुभोज भव्यहव्यानि बर्हिर्मुखमुखं शिखी ॥ ६९ ॥

मखधूमो हविर्गन्धी पावनः पवनेरितः ।
विचित्रमात्मसंसर्गाद् विदधे निर्मलान् जनान् ॥ ७० ॥

मन्त्रपूतं हुतवहे धाय्याकृतसमिन्धने ।
ऋत्विजस्तत्यजुर्हव्यद्रव्यमुद्दिश्य देवताम् ॥ ७१ ॥

हव्यैः सुरास्तथा स्फीतास्तद्दाराः पुनरागतान् ।
नानुक्तैश्चित्रवचनैः श्रद्धास्यन्ति यथा पतीन् ॥ ७२ ॥

ब्रह्मा तस्मिन् मखे बिभ्रच्चतुराननतामपि ।
श्रुतीश्चतस्रोऽधिमुखं यद् बभार तदद्भुतम् ॥ ७३ ॥

होता क्रतुवरे तस्मिन्नुच्चचारोच्चकैर्ऋचः ।
यजुर्वेदविदध्वर्युर्जुहाव ज्वलने हविः ॥ ७४ ॥

उद्गाता सप्तधा भिन्नं साम सामविशारदः ।
उज्जगौ ज्ञापयन्नुच्चैरङ्गुलीवलनैः स्वरान् ॥ ७५ ॥

अन्नैर्मार्दवसम्पन्नैः प्राज्यैराज्यैश्च पायसैः ।
सूपैरपूपैर्दधिभिस्तत्र सन्तर्पिता जनाः ॥ ७६ ॥

जनानां भोजनेष्वाज्यवर्षमाकर्ण्य तत्क्रतौ ।
षडब्धिमध्यमाज्याब्धिः स्वरक्षार्थं विवेश किम् ॥ ७७ ॥

दिशति क्षितिपे तस्मिन्नृत्विग्भ्यो यागदक्षिणाम् ।
दक्षिणा न दिगेकैव सर्वा अपि *तथाभवन् ॥ ७८ ॥

विसृज्य राज्यं ते तस्मिन्नशक्ताः परिपालने ।
तद्दत्तममितं वित्तमभजन्नापमित्यकम्§ ॥ ७९ ॥

---

* तथाभवन् दक्षिणा जाताः कृत्स्नराज्यदानादित्यर्थः । § अपमित्यं याचितकं **विनिमानलब्धम्** ।

निर्वर्तिते क्रतौ तस्मिन्नित्थमुर्वीशतक्रतोः ।
इष्टिं विधातुं पुत्रीयामुपचक्रमिरे द्विजाः ॥ ८० ॥

विधिवत् क्रियमाणायामिष्टौ तत्र महर्षिभिः ।
रावणोपप्लुता देवा भेजुः शरणमच्युतम् ॥ ८१ ॥

उन्मीलत्कैतकोद्यत्परिमलमिलितैर्नालिकेरद्रुमाली-
च्छायाजस्रप्रचारोपचितजडिमभिर्मन्थरैर्गन्धवाहैः ।
शान्ताध्वश्रान्तयः श्रीसहचरमचिराद् वीक्षितुं काङ्क्षमाणाः
क्षीराम्भोराशितीरं विविधमणिगणैर्भासुरं भेजिरे ते ॥ ८२ ॥

यं सूनुं जनयाम्बभूव महितः श्रीलोकनाथः सुधीः
ख्यातं चक्रकविं सतीसमुदयैः संमानिताम्बाभिधा ।
सर्गस्तस्य कृतौ निरर्गलगिरो भव्ये गुणालङ्क्रिया-
सान्द्रे श्रीमति जानकीपरिणये हृद्योऽयमाद्योऽजनि ॥ ८३ ॥

इति जानकीपरिणये

**प्रथमः सर्गः**

—o—

## अथ द्वितीयः सर्गः ।

अथ प्रपेदे त्रिदिवालयानां
क्षीरोदधिर्लोचनगोचरत्वम् ।
प्रत्युत्थितं क्षिप्रमिवादधान-
स्तेषाममन्दोच्चलितैस्तरङ्गैः ॥ १ ॥

कोणे क्वचिन्निर्मथितेऽपि लक्ष्मी-
सुधासुधांशुप्रमुखैर्बभूवे ।
कृत्स्ने पुनर्यत्र सतः पदार्थान्
को वा विशिष्टानवगन्तुमीष्टे ॥ २ ॥

मणीषु काचिद् रमणीषु काचि-
ल्लुब्धात्र भूयोऽपि तथाविधाः स्युः ।
इतीव ता हर्तुमना यदन्त-
र्जागर्ति देवो न करोति निद्राम् ॥ ३ ॥

कलत्रभावं कमलेक्षणस्य
चूडामणित्वं पुरशासनस्य ।
जीवातुभूयं विबुधावलीनां
बिभ्रत्यहो यत्पयसां विवर्ताः ॥ ४ ॥

ऐरावतोच्चैःश्रवसौ सुधां च
कल्पद्रुमानप्सरसोऽखिलाश्च ।
मुदा ददानेन दधाति येन
व्युत्पादितं स्वर्पतिरिन्द्रशब्दम् ॥ ५ ॥

त्रिविष्टपं यत्र खलु स्थितानां
शक्यं तरङ्गैरधिरोढुमुच्चैः ।
आवर्तपालीसुषिरैरगाधैः
शक्यं प्रवेष्टुं फणिविष्टपं च ॥ ६ ॥

येनानिशं सन्निहितादधीतं
सायुज्यविश्राणनमच्युतात् किम् ।
आसाद्य यं मुक्तजलस्वरूपाः
क्षीरात्मतां यत् सरितो भजन्ते ॥ ७ ॥

नेता नदीनां ननु बाडबेन¶
कुक्षावकारीति पुराणवाणी ।
शुचिं ज्वलन्तं जठरे वितन्वन्
विराजते† बाडबमन्वहं यः ॥ ८ ॥

मुक्ताफलैः पाकविदीर्णशुक्ति-
मुक्तैस्तरङ्गोत्करशीकरैश्च ।
समुत्थितैः सत्वरमन्तरिक्षं
तनोति यस्तारकितं दिवापि ॥ ९ ॥

कर्पूरधूलीशरदभ्रशुभ्रे
शङ्खावली यत्र भृशं सवर्णा ।
आलक्ष्यतामञ्चति सान्द्रसान्द्रे
चन्द्रातपे तारकमण्डलीव ॥ १० ॥

---

¶ ब्राह्मणेनागस्त्यनाम्ना । † बाडवं बाडबाग्निं ब्राह्मणं च ।

विक्षुण्णपक्षा मकरार्भकाणां
वालावलीनां वलनेन यत्र ।
जम्भारिदम्भोलिविलूनपक्षान्
धराधरेन्द्रा बहुमन्वतेऽद्रीन् ॥ ११ ॥

कल्लोलमाली स्फटिकावदातो
वहञ्छिखा बाडबशुष्मणो यः ।
सर्पाञ्चितस्यानुकरोति शम्भो-
र्भस्माङ्गरागस्य जटाधरस्य ॥ १२ ॥

निर्मोकनिर्मोचनमाचरन्तीं
तनुं फणीन्द्रस्य विडम्बयन्ती ।
विराजते यत्र तरङ्गरेखा
फेनच्छदां शुभ्ररुचिं क्षिपन्ती ॥ १३ ॥

क्षीराणि यस्मिन् सुलभानि तेभ्यः
सम्पादयन्तो दधिसर्पिषी च ।
पार्श्वद्वये यस्य जना वसन्तो
गाः पञ्चगव्यार्थमवन्त्यजस्रम् ॥ १४ ॥

गावो वितीर्णा भुवि यैर्द्विजेभ्यः
क्षीराणि दत्तानि च यैः शिशुभ्यः ।
यैस्तर्पिताः पायसतो द्विजेन्द्रा-
स्तेषां भवेद् यत्सविधे निवासः ॥ १५ ॥

आदाय दुग्धानि यतो यदीय-
पार्श्वद्वयद्वीपमहीधरेषु ।

वर्षेण तेषां जनयन्ति धारा-
    धराः सदा क्षीरमयीः स्रवन्तीः ॥ १६ ॥

तुङ्गाः प्रकामं धरणीधरेन्द्रा-
    स्तेभ्यः पुनस्तुङ्गतरास्तरङ्गाः ।
तिमिङ्गिलास्तुङ्गतमाश्च तेभ्यो
    यत्र स्थितिं सन्ततमाश्रयन्ते ॥ १७ ॥

तत्रामरास्तामरसालयायाः
    कान्तं निवासं जगतामपश्यन् ।
तल्पे पयःसिन्धुतरङ्गकल्पे
    *वातूलतूलैर्भरिते शयानम् ॥ १८ ॥

फणीन्द्रनिःश्वासमरुत्तरङ्गैः
    प्रतिक्षणक्षिप्तकुचोत्तरीयाम् ।
वक्षःस्थलस्थां कमलां कटाक्ष-
    परम्पराणां पदमादधानम् ॥ १९ ॥

उरस्तटे कौस्तुभनामधेय-
    मम्भोविवर्तं मणिमुद्वहन्तम् ।
अधीतकाठिन्यमिवाब्धिकन्या-
    पयोधराभ्यां परिरम्भणेषु ॥ २० ॥

निविष्टमारान्निजवैजयन्ती-
    सौरभ्यलोभादिव चञ्चलीकम् ।

---

* वातूलैः वातसमूहैरेव तूलैः भरिते पूरिते । तल्पभूतस्य शेषस्य वाताशनत्वादेव-मुक्तिः ।

श्रीवत्ससंज्ञं दधतं विशाले
वक्षःस्थले लक्ष्म विराजमानम् ॥ २१ ॥

नाभीसरोजानिशबोधनार्थं
बालातपेनेव समागतेन ।
पीताम्बरेणाञ्चितमञ्जनीलं
सन्ध्याघनाश्लिष्टमिवाञ्जनाद्रिम् ॥ २२ ॥

सदाधिकण्ठस्थलि वैजयन्तीं
समार्दवां श्यामरुचिं वहन्तम् ।
रागेण कण्ठग्रहणं वितन्वद्
भुवो भुजद्वन्द्वमिव प्रियायाः ॥ २३ ॥

नाभीसरोजेऽद्भुतमुद्वहन्तं
चतुर्मुखं कञ्चन चञ्चरीकम् ।
झङ्कारिणं निष्कपटैर्वचोभिः
कुन्देन्दुगौरभ्रमरीसमेतम् ॥ २४ ॥

लक्ष्मीभुवोर्वल्लभयोरजस्र-
मालिङ्गनानि क्रममन्तरेण ।
विधातुमिच्छन्तमिव स्फुरन्तं
भुजैश्चतुर्भिर्धृतरत्नभूषैः ॥ २५ ॥

भोगीन्द्रफूत्कारमरुद्वितीर्णै-
र्नाभिप्ररूढाब्जभवैः परागैः ।
पिशाङ्गितेनेव विहङ्गराजा
संसेवितं साञ्जलिना पुरस्तात् ॥ २६ ॥

वेषं स्वयं पौरुषमुद्वहद्भि-
 र्निजायुधानां निवहैः समन्तात् ।
उपस्थितं साञ्जलिभिः पठद्भि-
 र्दैतेयराजीविजयापदानम् ॥ २७ ॥

श्रिया समेतं नवकञ्जनाभं
 दयालसन्मानसमञ्जनाभम् ।
गुणाकरं पन्नरथेन्शयानं
 फणाधराणां प्रवरे शयानम् ॥ २८ ॥
(एकादशभिः कुलकम्)

यावत् प्रपेदे त्रिदशावली सा
 क्षीरोदधिं तावदवाप बोधम् ।
तद्दर्शनोदित्वरलज्जयेव
 द्राङ् निद्रया कैटभजिद् विमुक्तः ॥ २९ ॥

अथामरास्तं प्रणिपत्य देवं
 सुराहितोज्जासनजागरूकम् ।
प्राचीनवाचामपि गोचरत्व-
 मनश्नुवानं विभुमस्तुवंस्ते ॥ ३० ॥

नमो जगन्निर्मितिकर्मठाय
 नमो जगद्रक्षणदीक्षिताय ।
नमो जगन्निग्रहसाग्रहाय
 नमस्त्रिधाकल्पितमूर्तये ते ॥ ३१ ॥

जगन्ति सर्वाणि जगन्निवास !
 कर्तुं च धर्तुं च तथापहर्तुम् ।

वेधा हरिः शम्भुरिति त्वमेको
भिदां गुणैराकलितां बिभर्षि ॥ ३२ ॥

बोद्धा च बोधश्च तथैव बोध्यं
यष्टा च यागश्च हरे! तथेज्यम् ।
भोक्ता च भुक्तिश्च तथैव भोज्यं
वक्ता वचो वाच्यमपि त्वमेव ॥ ३३ ॥

स्तुत्यं कथं वा कथयन्ति वाचा-
मगोचरत्वं दधतं भवन्तम् ।
ध्येयं च धीराः कथमामनन्ति
पारे भवन्तं मनसां स्फुरन्तम् ॥ ३४ ॥

अनीश्वरत्वं च तथेश्वरत्व-
मनुत्तमत्वं पुनरुत्तमत्वम् ।
अनादितां किञ्च तथादितां च
धत्से विचित्रं कमलेक्षण! त्वम् ॥ ३५ ॥

पितेति गीतः पुरुषोत्तम! त्वं
माता कथं वा जगतां पुराभूः ।
किं चादितेः पुत्र इति प्रतीतः
*पुत्री कथं वा ‡विधिना त्वमासीः ॥ ३६ ॥

त्रिस्रोतसं त्वच्चरणारविन्दं
त्रयीं पुनस्ते वदनारविन्दम् ।

---

* पुत्री तनया अथ च पुत्रवान् । ‡ विधिना नियत्या हेतुना अथ च ब्रह्मणा अभेदे त्वेषा तृतीया ।

त्वन्नाभिरूढं च तथारविन्दं
विश्वस्य कर्तारमसूत देवम् ॥ ३७ ॥

इति स्तुतिं निर्जरसां निशम्य
पीताम्बरे प्रीतिभरं प्रपन्ने ।
आरेभिरे शंसितुमाशराणा-
मुपप्लवं ते रभसेन तस्मै ॥ ३८ ॥

लङ्कापुरे तिष्ठति निर्विशङ्को
रात्रिञ्चरो रावणनामधेयः ।
बर्हिर्मुखैरिन्द्रमुखैरजस्र-
मुपासितश्चण्डभुजप्रतापः ॥ ३९ ॥

उरस्तटे तस्य दृढे निपत्य
यदा विशीर्णं शतकोटिधाभूत् ।
वज्रं तदारभ्य पुरन्दरस्य
बिभर्ति नूनं शतकोटिसंज्ञाम् ॥ ४० ॥

तं सङ्गतः सङ्गररङ्गभूमौ
देवस्य सूनुर्दिवसेश्वरस्य ।
अकीर्तिपङ्केन यदानुलिप्त-
स्तदादि तं काल इतीरयन्ति ॥ ४१ ॥

स्थातुं तदग्रे समराङ्गणेषु
प्रभुर्न यस्मादभवत् प्रचेताः ।

तस्मादभूत् तस्य किलाप्प्रभुत्वं*
व्याकुर्वते तत् परथानभिज्ञाः ॥ ४२ ॥

तेनाददानेन समस्तमर्थ-
मकिञ्चनत्वं गमितः कुबेरः ।
सखानुरूपो भवति स्मरारे-
श्चिराय भिक्षोर्हरिदम्बरस्य ॥ ४३ ॥

आमोदिताद् गन्धसमर्पणेन
गृह्णाति तस्मात् पवनोऽनुवेलम् ।
तदङ्गलग्नं सुरतान्तजात-
स्वेदाम्बुबिन्दूत्करभारहारम् ॥ ४४ ॥

उपास्यते भूमिसुरैः सदा यद्
धत्ते मुखत्वं दनुजद्विषा यत् ।
हविर्यदश्नाति च मन्त्रपूतं
तेजश्च तत् सम्प्रति सेवते तम् ॥ ४५ ॥

सेवां सदा मन्मथशासनस्य
कुर्वन् क्षयं नोज्झति शीतभानुः ।
उपासनं तस्य पुनर्वितन्वन्
क्षयं न जानाति कदापि चन्द्रः ॥ ४६ ॥

दुर्दर्शतां न श्रयते न तापं
तनोति न स्वेदकणान् विधत्ते ।

---

* अप्प्रभुत्वं जलप्रभुत्वम् अथचाशक्तत्वम् । अर्थान्तरे 'अनचि च' (८. ४. ४७) इति द्वित्वेन पकारद्वयोपपत्तिः ।

नखंपचं नातनुते च वर्त्म
तस्य प्रसादं तपनोऽभिकाङ्क्षन् ॥ ४७ ॥

सुधान्धसस्तं विधुमाश्रयन्तं
सदा समग्रं सविधे निरीक्ष्य ।
सेवागता वह्निमुखाः सतृष्णा-
स्तिष्ठन्ति लीढोभयसृक्कजिह्वाः ॥ ४८ ॥

बन्दीकृतानां सुरसुन्दरीणां
करस्फुरच्चामरमारुतेन ।
तदुष्णनिःश्वाससमेधितेन
स सेव्यते पञ्चशरज्वरार्तः ॥ ४९ ॥

दिगन्तदन्तावलदन्तकुन्त-
निरन्तरोद्घट्टननिष्ठुरेण ।
उरस्तटेन प्रधने करोति
स कुण्ठिताश्रीणि सुरायुधानि ॥ ५० ॥

इत्थं समस्तानभिभूय देवान्
निजप्रतापेन निशाचरेन्द्रः ।
उपेक्षितो व्याधिरिवैधमानः
पीडामजस्रं जगतां विधत्ते ॥ ५१ ॥

सबन्धुवर्गं जहि रावणं त्वं
सङ्ग्रामभूमौ शरधोरणीभिः
तपस्विहिंसाकलितादरं तं
दारान् परेषां प्रसभं हरन्तम् ॥ ५२ ॥

इतीरिते खेचरमण्डलीभि-
    र्मुखाम्बुजारेरजनिष्ट वाणी ।
यथारविन्दान्मकरन्दधारा
    यथा सुधा मण्डलतः सुधांशोः ॥ ५३ ॥

उपप्लुतानि क्षणदाचरेण
    जाने समस्तानि जगन्ति तेन ।
वरप्रदानात् कमलासनस्य
    क्षान्तं मया हन्त चिरं तथापि ॥ ५४ ॥

पितामहं प्रीततमं तपोभिः
    स यातुधानापशदो ययाचे ।
अवध्यतां तावदमर्त्यजाते-
    र्गर्वेण कुर्वन् मनुजेष्ववज्ञाम् ॥ ५५ ॥

भवन्नहं दाशरथिर्नृशंस-
    निशाचरप्राणसमीरणेन ।
सन्तर्पणं सायकपन्नगानां
    बुधा! विधास्यामि समीकभूमौ ॥ ५६ ॥

दशाननेनोद्वहता कृपाणं
    शुभे मुहूर्ते स्वयमात्ममूर्ध्नाम् ।
आरब्धमासील्लवनं पुरा यत्
    समापयिष्यामि शरैरहं तत् ॥ ५७ ॥

गीताशराणां कुहनाप्रगल्भः
    क्षेप्ता गिरेरन्तकशासनस्य ।

भेत्ता स्थितीनां निजदुर्विनीतै-
भोक्ता फलानां भविता स युद्धे ॥ ५८ ॥

हवींषि भूयः सवनेषु भुङ्ध्वं
कल्पद्रुपुष्पाणि कचेषु धद्ध्वम् ।
सुरा! विमानेषु विशङ्कमाध्वं
चित्तानुरोधेन वधूरुपाध्वम् ॥ ५९ ॥

आधूसरानाशरचक्रवाल-
विनाशसंसूचनधूमकेतून् ।
चिरेण बद्धान् सुरलोकबन्दी-
वेणीभरान् मोक्ष्यथ निर्विशङ्कम् ॥ ६० ॥

इति प्रतिज्ञाय निशाचराणां
वधं सुधासारमुचात्मवाचा ।
आश्वास्य बृन्दारकबृन्दमारा-
दन्तर्दधे सत्वरमब्जनाभः ॥ ६१ ॥

अहार्यधैर्ये सुरकार्यधुर्ये
तिरोहिते दैवतसार्वभौमे ।
आशा वितन्वन् मुखराश्चतस्र-
श्चतुर्मुखो वाचमिमामुवाच ॥ ६२ ॥

आश्चर्यचर्याननिवार्यवीर्यान्
गाम्भीर्यचातुर्यनिधीन् सधैर्यान् ।
देवीषु ऋक्षीषु च वानरीषु
प्लवङ्गरूपांस्तनयान् प्रसूध्वम् ॥ ६३ ॥

आत्मेति पुत्रं श्रुतयो यदाहु-
स्तत् पुत्ररूपं दधतो भवन्तः ।
सहायभूयं कलयन्तु भूमौ
कार्यं चिकीर्षोर्भवतां मुरारेः ॥ ६४ ॥

प्रागेव भल्लूकवरो बलेन
विजृम्भमाणोऽजनि जृम्भतो$ मे ।
त्रिविक्रमस्य त्रिगुणानि सप्त
प्रदक्षिणानि प्रकटं व्यधाद् यः ॥ ६५ ॥

तथेति तच्छासनमादितेयाः
शिरोभिरादाय विनीतिनम्रैः ।
अजीजनन्नात्मसमान् कुमारान्
सौजन्यधन्यान् बलिनो वदान्यान् ॥ ६६ ॥

शतक्रतुर्वालिनमुग्रवीर्यं
सुग्रीवमर्को वरुणः सुषेणम् ।
वायुर्हनूमन्तममन्दवेगं
वह्निश्च नीलं जनयाम्बभूव ॥ ६७ ॥

इत्थं सुतैर्देवमहर्षिसिद्ध-
गन्धर्वविद्याधरकिन्नराणाम् ।
प्लवङ्गरूपैः सवनाचला भू-
राच्छादिताभूज्जलदैरिव द्यौः ॥ ६८ ॥

---

$ अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात् परस्मैपदम् ।

अथाविरासीत् क्षितिभर्तुरिष्टे-
रन्ते पुमान् कश्चन वीतिहोत्रात् ।
पात्रं दधानः परमान्नपूर्णं
स्फुरत्सुधासारमिवेन्दुबिम्बम् ॥ ६९ ॥

पत्नीरिदं प्राशय भूपते! ते
पुत्रोदयस्तासु भविष्यतीति ।
वदन् ददौ क्षोणिभुजे स तूर्ण-
मनुप्रविष्टं हरिणा तदन्नम् ॥ ७० ॥

पयश्चरुं भूपतये वितीर्य
तदाहितां च प्रतिगृह्य पूजाम् ।
ऋत्विग्भिरालोकितमादरात् त-
दन्तर्दधे भूतमभूतपूर्वम् ॥ ७१ ॥

प्राजापत्येऽथ तस्मिन् गतवति पुरुषे पायसं तद् विभज्य
प्रीतामर्धेन चक्रे क्षितिपतितिलकः कोसलाधीशपुत्रीम् ।
अर्धस्यार्धेन कन्यां मगधनरपतेः केकयेन्द्रात्मजां तां
शिष्टस्यार्धेन भूयो मगधपतिसुतामष्टमांशेन चासौ ॥ ७२ ॥

आस्वाद्य पायसमकृत्रिममिन्दुबिम्ब-
निर्यत्ननिर्यदमृतौघलसद्रसाश्रि ।
भूमीपुरन्दरपुरन्ध्रिजनेन गर्भः
क्षेमाय सर्वजगतां बिभरांबभूवे ॥ ७३ ॥

यं सूनुं जनयांबभूव महितः श्रीलोकनाथः सुधीः
ख्यातं चक्रकविं सतीसमुदयैः संमानिताम्बाभिधा ।
सर्गः पाण्ड्यमहीभुजा बहुमते नव्ये तदीये महा-
काव्ये दीव्यति जानकीपरिणये चारुर्द्वितीयोऽजनि ॥७४॥

इति जानकीपरिणये

द्वितीयः सर्गः ।

---

## अथ तृतीयः सर्गः ।

अथावनीपालवधूषु दौहृद-
व्यथासमाश्लिष्टशरीरयष्टिषु ।
विशेषतः कोसलभूपजा बभौ
सितासु राकारजनीव रात्रिषु ॥ १ ॥

कुचद्वयेनासितचूचुकश्रिणा
स्फुरच्छरस्तम्बरुचा मुखेन च ।
नितम्बिनी स्निग्धतरेण चक्षुषा
विनाक्षरं व्याहरति स्म दौहृदम् ॥ २ ॥

तनोर्यदाहुः समवायिकारणं
भुवं ततो गर्भजुषो मधुद्विषः ।
नरेन्द्रभार्या वपुषः सिसृक्षया
मुदा मृदास्वादनमाचरद् ध्रुवम् ॥ ३ ॥

स्तनद्वयी भूपतिसुभ्रुवोऽसिता
मुखे बभौ श्रीदयिताय शैशवे
चिराय पातुं जतुमुद्रिता सुधा-
घटद्वयीव प्रहितादरात् सुरैः ॥४॥

प्रियां निजोत्सङ्गभुवो विभूषणं
विधाय पप्रच्छ तदीप्सितं मिथः ।
समुन्नमय्य त्रपया नतं मुखं
मुदा समाघ्राय च मेदिनीश्वरः ॥ ५ ॥

तदक्षयं शोकहरं सुखावहं
मनोवचोगोचरतामनाश्रितम् ।
भवत्प्रसादान्मयि वस्तु वर्तते
किमर्थयेयान्यदनीदृशं विभो! ॥ ६ ॥

इति ब्रुवाणामभिनन्द्य वल्लभां
चुचुम्ब मृद्वन्धि तदीयमाननम् ।
तदुक्तिसारं स सुधीः पदे पदे
विनिस्सरन्तं तरसालिहन्निव ॥ ७ ॥

अपाङ्गमेवासितमब्जचक्षुषो
वतंसनीलोत्पलभावमानशे ।
श्रमोदबिन्दूत्कर एव हारतां
भृशालसायाः प्रतिकर्मकर्मणि ॥ ८ ॥

हरिर्विसस्मार वधूदरे वसन्
फणाधराधीश्वरभोगमायतम् ।
तपोधनानामपि पावनं मनो
वटद्रुमस्यापि च मञ्जुलं दलम् ॥ ९ ॥

क्रमेण पुष्टिः क्षितिपालसुभ्रुव-
स्तथा प्रतीकैरखिलैः समाददे ।
अदृश्यतायाः प्रथमं निकेतनं
विलग्नमक्ष्णोर्विषयो यथा भवेत् ॥ १० ॥

वधूदरे गर्भभरात् सगौरवे
गभीरतामुज्झति नाभिगह्वरे ।

बभौ स्थिता तत्र चिरात् प्रधाविनी
तमश्छटेवोपरि रोमवल्लरी ॥ ११ ॥

चकार कर्माणि यथाविधि क्रमाद्
विधानवित् पुंसवनादिकानि सः ।
प्रणीतसंस्कारतया विशेषतो
रराज गर्भश्च नरेन्द्रसुभ्रुवः ॥ १२ ॥

अणोरणीयस्त्वमधत्त यत् पुरा
तदा महत्त्वं महतो बभार यत् ।
वधूदरे तत्र चिरस्थिते हरौ
ततोऽभिसंक्रान्तमवैमि तद् द्वयम् ॥ १३ ॥

विलम्बिनीमभ्रघटामिवाम्भसा
फलौघभारेण नतां लतामिव ।
ननन्द गर्भेण सगौरवेण तां
विराजितां वीक्ष्य विशामधीश्वरः ॥ १४ ॥

असूत तारेऽदितिदैवते सुतं
नरेन्द्रपत्नी प्रथमा सुखेन सा ।
तिथौ नवम्यां स्फुटमुच्चगेषु च
ग्रहेषु पञ्चस्वधिकर्किलग्नकम् ॥ १५ ॥

अरिष्टदीपास्तदनल्पवर्चसा
क्षणादभूवन्नभिभूततेजसः ।
तदन्वयाधीश्वरभानुरोचिषा
ग्रहा इवान्ये गगनाङ्गणास्थिताः ॥ १६ ॥

अजीजनद् वैजनने सुतं ततो
निरामनस्याश्वपतेः कुमारिका ।
त्रयीव धर्मं खनिभूरिवोज्ज्वलं
मणिं दिगैन्द्रीव मयूखमालिनम् ॥ १७ ॥

शुभे मुहूर्ते सुषुवेऽथ मागधी
यमौ सुतौ विद्विषतां यमोपमौ ।
यथादितिर्वासवदानवद्विषौ
यथाश्विनी निर्जरसां चिकित्सकौ ॥ १८ ॥

तथोच्चकैर्मङ्गलसूचकः श्रुति-
प्रहर्षदोऽजृम्भत तूर्यनिस्वनः ।
नभस्तले निर्जरदुन्दुभिध्वनिं
यथा जनोऽमन्यत तत्प्रतिध्वनिम् ॥ १९ ॥

प्रहर्षतो वारविलासिनीजनाः
स्फुटं नटन्तो जननोत्सवे हरेः ।
सताण्डवा नूतननीरदोदये
शिखण्डिनीनामिव मण्डला बभुः ॥ २० ॥

प्रदक्षिणाकारशिखः प्रसन्नतां
प्रशान्तधूमौघतया प्रकाशयन् ।
मुखं सुराणां स्फुरति स्म तन्मुख-
प्रसादमग्निः कथयन्निव स्वयम् ॥ २१ ॥

सुरैर्विमुक्ता सुरभूरुहोद्भव-
प्रसूनवृष्टिर्द्रुतमासदद् भुवम् ।

महोत्सवे तत्र वधूमुखेरितः
क्षणादुलूलुध्वनिरानशे दिवम् ॥ २२ ॥

निधाय रंहोभरमङ्गनोद्भवे
सुते समस्तं सुरकार्यसिद्धये ।
चचार सामोदमितस्ततः शनै-
र्ध्रुवं नभस्वानुदये जगत्पतेः ॥ २३ ॥

असौ यशश्चन्द्रिकयाग्रजः शिशुः
क्षणेन नस्तापमपाकरिष्यति ।
भुजप्रतापोदितमाशरप्रभो-
रिति प्रसन्ना हरितोऽभवंस्तदा ॥ २४ ॥

जनाय पुत्रोदयशंसिने मुदा
तथा वसूनि प्रददौ धरापतिः ।
धनाधिनाथोऽपि तदर्थसम्पदे
यथानुवेलं स्पृहयेत विस्मितः ॥ २५ ॥

विशामधीशो विहितावगाहनः
सितांशुगौरं सिचयं नवं दधत् ।
विभूषितश्चन्दनचर्चितः स्रजं
वहन् द्विजैः सङ्कुलमाप मन्दिरम् ॥ २६ ॥

सुताननाम्भोजचतुष्टयीं मुहु-
र्ननन्द पश्यन्नवनीपुरन्दरः ।
विलोकयन् दानवसूदनो यथा
चतुर्मुखीं नाभिभुवः स्वयम्भुवः ॥ २७ ॥

अनुष्ठिते ब्रह्मभुवा महर्षिणा
　　कृतप्रजाशर्मणि जातकर्मणि ।
विशेषतो राजसुता विरेजिरे
　　यथा सुधांशोः शरदागमे कराः ॥ २८ ॥

धरासुरेभ्यः प्रदिशन् धरापतिः
　　सुवर्णभूषाम्बररत्नसञ्चयान् ।
ससर्ज बह्वीरपवर्जनोदकैः
　　सखीः सख्या जितकल्पपादपः ॥ २९ ॥

त्रिहायनीर्द्रोणदुघाः सतर्णकाः
　　प्रभुर्द्विजेभ्यः प्रदिदेश नैचिकीः ।
महोत्सवे तत्र भुवश्च भूयसीः
　　फलान्वितोच्चावचसस्यमालिनीः ॥ ३० ॥

धनैस्तदाशा वसुधासुधान्धसां
　　न केवलं पूरयति स्म भूपतिः ।
यशोभिराशा अपि निन्दितेन्दुभिः
　　शचीपतिप्रष्ठसुधान्धसामहो ॥ ३१ ॥

श्रुतेन यागेन ऋणाद् विमोचित-
　　श्चिरादृषीणां मरुतां च पार्थिवः ।
ऋणात् पितॄणां च विसर्जितस्तदा
　　विराजते स्म प्रसवेन देववत् ॥ ३२ ॥

अथाभिधां राम इति क्षितीश्वर-
　　श्चकार सूनोः प्रथमस्य धर्मवित् ।

अघौघतूलावलिपावकार्चिषं
पुमर्थविश्राणनकल्पवल्लरीम् ॥ ३३ ॥

ततः सुतेषु त्रिषु वल्लभो भुवो
निनाय कञ्चिद् भरताभिधार्थताम् ।
तथेतरं लक्ष्मणशब्दवाच्यतां
परं च शत्रुघ्नपदाभिधेयताम् ॥ ३४ ॥

निपीय धात्रीवदनाद् विनिर्गतां
चिरेण गीतिं मणिमञ्चशायिनः ।
सुखं निदद्रुः शिशवो मुहुर्मुहुः
सरोदनारम्भमुदञ्चितस्मितम् ॥ ३५ ॥

द्वयेन जान्वोः कनकाङ्गणे कर-
द्वयीसहायेन निरूढचङ्क्रमाः ।
विजह्रिरे ते नरपालबालका-
स्तटे सुमेरोरिव सिंहशावकाः ॥ ३६ ॥

वचांसि धात्रीकथितानि दारका
धरापतेरन्ववदन्शुका इव ।
जनस्य सिञ्चन्त इव श्रुतीः सुधा-
रसेन वर्णैरनतिस्फुटोदितैः ॥ ३७ ॥

दृढं गृहीत्वा जननीकराङ्गुलीः
समर्पयन्ति स्म पदानि कानिचित् ।
शनैश्शनैरङ्गणमेदिनीषु ते
पदक्वणत्काञ्चनकिङ्किणीगणाः ॥ ३८ ॥

विजह्रिरे वीथिषु बालकैः समं
नृपालबालाः क्षितिरेणुरूषिताः ।
वनीषु दीव्यत्कुसुमासु षट्पदाः
प्रसूनधूलीपरिधूसरा इव ॥ ३९ ॥

प्रणीतचौलः प्रचलच्छिखण्डकः
कुमारवर्गोऽक्षरवेदिकां गतः ।
लिपिं समस्तां जगृहे न केवलं
धियो विलासैर्हृदयं गुरोरपि ॥ ४० ॥

अथोपनीता विधिवत् पुरोधसा
धृतोपवीताजिनदण्डमेखलाः ।
चकासति स्म प्रथमाश्रमस्य ते
यथावताराः क्षितिपालनन्दनाः ॥ ४१ ॥

वसिष्ठतो ब्रह्मविदां वरिष्ठत-
स्त्रयीं तदङ्गैः सममध्यगीषत ।
अनेहसाल्पेन च ते प्रपेदिरे
तथा समस्तासु कलासु कौशलम् ॥ ४२ ॥

सुधन्वनोऽस्त्राणि समुज्ज्वलानि ते
सुखादशिक्षन्त सुता महीक्षितः ।
प्रकाशितास्तैरभवन् दुरासदाः
प्रभाकरोस्रैरिव घर्मवासराः ॥ ४३ ॥

दृढव्रतैर्धर्मरतैर्यशस्विभि-
र्दयालुभिर्दानपरैर्विचक्षणैः ।

बहुश्रुतैः सज्जनसम्मतैः स तैः
सुतैश्चतुर्भिः शुशुभे महीपतिः ॥ ४४ ॥

उवास रामेण विना न लक्ष्मणः
क्षणं न चोवास स तं विना पुनः ।
वसेत् प्रसादो विधुमन्तरेण किं
विना प्रसादेन वसेद् विधुश्च किम् ॥ ४५ ॥

परस्परं तौ भरतश्च लक्ष्मणा-
नुजश्च सौहार्दमुभावपुष्यताम् ।
यथा शचीवल्लभकैटभद्विषौ
यथाश्विनौ मारुतपावकौ यथा ॥ ४६ ॥

अथासदत् तं क्षितिपाकशासनं
*विकल्पपङ्केरुहसम्भवो मुनिः ।
अभूत् त्रिशङ्कोस्त्रिदिवाधिरोहणे
यदीयवाणी प्रगुणाधिरोहणी ॥ ४७ ॥

अनर्घ्यमर्घ्यादिभिरीश्वरः क्षिते-
स्तमर्चयित्वा विधिवत् तपोधनम् ।
प्रहृष्टचेताः कुशपूतविष्टरे
निविष्टमाचष्ट वसिष्ठसन्निधौ ॥ ४८ ॥

अनुग्रहोऽयं मयि दर्शितस्त्वया
ततः प्रतिष्ठां गतमद्य मत्कुलम् ।

* विकल्पब्रह्मा विश्वामित्र इत्यर्थः ।

मुने! निकेतं परिपूतमद्य मे
 जनिर्मदीया च फलान्विताजनि ॥ ४९ ॥
त्वया यदुद्दिश्य मुनीन्द्र! भूरियं
 पदारविन्दार्पणमानिताधुना ।
तदर्पयिष्यामि रयादसंशयं
 विहाय शङ्कामभिधेहि वाञ्छितम् ॥ ५० ॥
इति प्रहर्षादनुकूलवादिनं
 धराधिनाथं मुनिरभ्यभाषत ।
भवान् हरिश्चन्द्रनृपश्च वीक्षितौ
 मनोः कुले द्वाविह सत्यसङ्गरौ ॥ ५१ ॥
अहं विधित्सुः सवनं महीपते!
 तदन्तरायप्रशमाय पूर्वजम् ।
कुमारमानेतुमिहागतोऽस्मि ते
 सहायवन्तं धनुषा प्रयच्छ तम् ॥ ५२ ॥
सुबाहुसुन्दप्रभवौ दुरासदौ
 निशाचरावध्वरविघ्नकारिणौ ।
निहन्तुमीष्टे सुत एव ते रणे
 हिमान्धकाराविव चण्डदीधितिः ॥ ५३ ॥
इतीरयित्वा विरतं मुनीश्वरं
 गतप्रहर्षः पतिरब्रवीद् भुवः ।
क्व मे कुमारः सुकुमारविग्रहो
 निशाचराः कर्कशमूर्तयः क्व वा ॥ ५४ ॥

अशिक्षितास्त्रः सकलास्त्रकोविदै-
रपेतमायः कपटाहवप्रियैः ।
अवाहिनीको ध्वजिनीयुतैः कथं
निशाचरैर्युद्धमसौ करिष्यति ॥ ५५ ॥

न दीयते वत्स इति त्वदग्रतो
बिभेमि वक्तुं तदये मुनीन्द्र! मे ।
स्वयं विदित्वाशयमत्र दारके
दयस्व लब्धे विविधैर्व्रतैर्मया ॥ ५६ ॥

इतीरिते भूतलशीतलत्विषा
तथा स जज्वाल तपोधनः क्रुधा ।
भयेन मेने तमिमं यथा जनो
जगद् दिधक्षुं प्रलयाशुशुक्षणिम् ॥ ५७ ॥

चचाल भूमिर्जलधिः प्रचुक्षुभे
शिखी न जज्वाल ववौ न मारुतः ।
प्रपेदिरे त्रासभरं सुधान्धस-
स्तपोधने क्रोधवशं गते सति ॥ ५८ ॥

अथाब्रवीदग्रसरस्तपस्विना-
महं गमिष्यामि पुनर्यथागतम् ।
चिरं भवाञ्जीवतु भूपते! न चे-
न्मृषा प्रतिज्ञां भुवि कः करिष्यति ॥ ५९ ॥

उदीरितायामिति वाचि तत्क्षणा-
दमर्षिणा गाढतरं महर्षिणा ।

अरुन्धतीजानिरुवाच मानसीं
व्यथां विधून्वन्नवनीबिडौजसः ॥ ६० ॥

कुले मनोरश्रुतपूर्वमर्थिभि-
र्ब्रवीति नास्तीति पदं कथं भवान् ।
ननु प्रतिष्ठा भुवनेषु विश्रुता
वदान्यतोपज्ञममुष्य भूपते! ॥ ६१ ॥

महीपते! नूतनवेधसे विना
विचारलेशं तनयं त्वमर्पय ।
अयं क्षमो राक्षसनिग्रहे स्वयं
तथापि भाग्याद् भवतः स चागतः ॥ ६२ ॥

त्रिशङ्कुसंस्थापनमातनोज्जग-
त्त्रयं विनिर्मातुमिवायमादितः ।
विधूय च क्षात्रमसौ तपश्चयैः
समासदद् ब्रह्मऋषित्वमञ्जसा ॥ ६३ ॥

पुरा मदीयैस्तनयैः सहात्मनः
सुताननेनाकलितोऽपि निग्रहः ।
कृतोऽमुना किञ्च तथा त्रिशङ्कुना
समं शुनःशेफमनुग्रहोऽस्पृशत् ॥ ६४ ॥

इत्थं वसिष्ठवचनैरपनीतशोक-
भूमा प्रसन्नहृदयः कुशिकात्मजाय ।
रामं धनुर्धरमदान्मदनाभिरामं
राजा गृहीतधनुषा सह लक्ष्मणेन ॥ ६५ ॥

यं सूनुं जनयाम्बभूव महितः श्रीलोकनाथः सुधीः
ख्यातं चक्रकविं सतीसमुदयैः संमानिताम्बाभिधा ।
सावित्र्या सममेव यं श्रितवती वाग्देवता सादरं
तत्काव्येऽत्र हि जानकीपरिणये सर्गस्तृतीयोऽजनि ॥ ६६ ॥

इति जानकीपरिणये

तृतीयः सर्गः ।



अथ चतुर्थः सर्गः ।

पुरमुच्छ्रितध्वजमुदग्रतोरणं
कदलीतरुक्रमुकषण्डमण्डितम् ।
जलसिक्तमुक्तकुसुमप्रतोलिकं
तदभून्नरेन्द्रसुतयोर्विनिर्गमे ॥ १ ॥

अभिवाद्य मातृजनमश्रुशीकरै-
रहिमैस्तदाक्षिगलितैः समुक्षितौ ।
पितरं प्रणम्य च पुरोधसा समं
सविधं मुनेरभजतां क्षणेन तौ ॥ २ ॥

अथ रामलक्ष्मणसमेतपार्श्वभू-
र्निरगान्नरेन्द्रभवनात् तपोधनः ।
सविधे सुरासुरपुरोधसौ दधत्
प्रथमाचलादिव तुषारदीधितिः ॥ ३ ॥

समवाकिरन् सपदि लाजसञ्चयैः
पुरयोषितः क्षितिपतेः कुमारकौ ।
कुसुमैर्वनेषु चिरिबिल्वशाखिका
मधुमाधवाविव समुज्झितैर्निजैः ॥ ४ ॥

सरयूजलाचमननिर्मलात्मने
रघुनन्दनाय सकनीयसे मुनिः ।
अदिशद् बलामतिबलां च विद्ययो-
रनुभावतः *स न तयोः क्लमं ययौ ॥ ५ ॥

---

* सः सकनीयान् रामः ।

सरयूतटे विततयागकर्मणां
    तपनान्ववायधरणीभुजाममी ।
अधिवेदि यूपकुलमालुलोकिरे
    पुलकाङ्कुरौघमिव हर्षजं भुवः ॥ ६ ॥

विषयेषु वा गिरिषु वा नदीषु वा
    पथि यद्यदक्षिसरणीमगाहत ।
विनयेन तत्तदभिधामपृच्छतां
    मुनिमात्मजौ नरपतेः कुतूहलात् ॥ ७ ॥

सरसैः फलैः क्षितिरुहा विहङ्गमाः
    कलनिस्वनैः कुसुमसञ्चयैर्लताः ।
हरिणीगणाश्च तरलैर्विलोकितैः
    समपूजयन् सपदि राजनन्दनौ ॥ ८ ॥

तरसा तमाश्रममम्मी प्रपेदिरे
    हरकोपदग्धवपुषो मनोभुवः ।
वहता परागचयमङ्गभस्मनां
    मरुता विमोहितमृगाद्विजव्रजम् ॥ ९ ॥

अयमाश्रमः पशुपतेस्तदक्षिभू-
    शिखिदग्धमङ्गमिह पुष्पधन्वनः ।
अपतत् तदाप्रभृति दिक्ष्वसौ पुनः
    प्रथतेतरां जनपदोऽङ्गसंज्ञया ॥ १० ॥

रजनीचरी वसति काचिदत्र तां
जहि सायकेन निशितेन ताटकाम् ।
रघुवंशरत्न! भवतामनामयौ
विषयौ करूशमलदाभिधाविमौ ॥ ११ ॥

इति वाचमूचिषि तपस्विनां वरे
धनुराततज्यमतनिष्ट तत्क्षणात् ।
हरितां मुखानि मुखराणि शिञ्जिनी-
जनितैश्चकार च स भैरवै रवैः ॥ १२ ॥

धनुषः स्वनं रघुपतेर्घनाघन-
ध्वनिगर्वचर्वणचणं निशम्य सा ।
कलुषा रुषा परुषभाषणापतत्
पुरुषादिनी विषमवेषभीषणा ॥ १३ ॥

दधतीभचर्मपरिधानमायतं
स्तनमण्डलार्पितकपालमालिका ।
नररक्तचन्दनरसेन रूषिता
शवभस्मकल्पितकपोलमण्डना ॥ १४ ॥

प्रलयान्धकारपटलैरिवोद्गतै-
र्भुवनत्रयीदुरितसञ्चयैरिव ।
अयशोभरैरिव कुलस्य रक्षसां
द्रुहिणेन मेचकरुचिर्विनिर्मिता ॥ १५ ॥

ज्वलदग्निकुण्डनयना विशङ्कट-
भ्रुकुटीविटङ्कितभयङ्करानना ।

चपला कडारचिकुरोत्करा जव-
 द्रुतपातितद्रुमविकीर्णपद्धतिः ॥ १६ ॥
रदनान्तरेषु चिरलग्नजाङ्गल-
 ग्रहणेच्छया विदधती विलोलनम् ।
रसनाञ्चलेन मुहुरास्यगह्वरे
 विकटाट्टहासमुचि विस्रगन्धिनी ॥ १७ ॥
अथ राघवोऽध्वनि निरीक्ष्य राक्षसीं
 प्रजिहीर्षयोद्यतभुजाग्रमायतीम् ।
वहता शरेण यमदण्डचण्डतां
 जगदापदा सह निनाय तां क्षयम् ॥ १८ ॥
रघुनन्दनः समतनोन्निशाचरी-
 कदनं प्रयासलवमन्तरेण यत् ।
समशिश्रियत् सपदि पूर्वरङ्गतां
 क्षणदाचरोन्मथननाटकस्य तत् ॥ १९ ॥
अथ ताटकानिधनहर्षितान्मुने-
 रधिगम्य तावखिलमन्त्रमण्डलम् ।
रघुनन्दनावभवतां दुरासदौ
 शिखिभास्करौ प्रचुरतेजसाविव ॥ २० ॥
अभजन्त ते तदनु वामनाश्रमं
 श्रमहारिशाखितलवर्तितापसम् ।
कुशवल्कलाजिनविराजितोटज-
 प्रकरं प्रशान्ततरसत्त्वसङ्कुलम् ॥ २१ ॥

अथ तत्र गाधितनुभूस्तपोवने
विधिवत् समारभत कर्तुमध्वरम् ।
प्रथमानभव्यरसहव्यतर्पित-
त्रिदिवालयोज्झितसुधारसादरम् ॥ २२ ॥

अथ रामलक्ष्मणभुजाभिरक्षिते
महिते मुनेश्चलति यज्ञकर्मणि ।
वपुषा विडम्बितवलाहकैरभूत्
क्षणदाचरैर्निबिडमम्बरं क्षणात् ॥ २३ ॥

विततप्रयोगमधिवेदि ऋत्विजां
कुलमाकुलं विदधतो निशाचराः ।
क्षतजं पुरैव मुमुचू रघूद्वह-
प्रहितज्वलद्विशिखजालघट्टनात् ॥ २४ ॥

दधिरे मखोपकरणानि शोणतां
रुधिरेण तेन पतता नभस्स्थलात् ।
नयनाञ्चलानि नरपालबालयो-
रभजत् क्षणादरुणताममर्षतः ॥ २५ ॥

समधत्त यत् पवनदैवतं दुरा-
सदमस्त्रमुद्भटजवं शरासने ।
रघुनन्दनः सपदि तेन ताटका-
तनुजं जले जलनिधेरपातयत् ॥ २६ ॥

अदहत् सुबाहुमपि पावकास्त्रतो
रजनीचरं सरभसं रघूद्वहः ।

अथ रक्षसां तदखिलं बलं भया-
    दभजद् दिशासु लघु कान्दिशीकताम् ॥ २७ ॥

इति राघवक्षपितविघ्नमध्वरं
    निरवर्तयत् सपदि ऋत्विजां गणः ।
प्रमदाश्रुभिः प्रथममाप्लुतः शनै-
    र्मुनिरातनोदवभृथाप्लवं ततः ॥ २८ ॥

शुभसूचकाक्षरमनोज्ञया गिरा
    कलयन् प्रमोदभरितं रघूद्वहम् ।
अवदन्मुनिः कुशिकभूर्निमन्त्रितो
    मिथिलाधिपेन सवनं विधित्सुना ॥ २९ ॥

अयि राम! सिद्धमिह ते प्रभावतः
    क्रतुकर्म शर्म च विनिर्मितं मम ।
*जनकाज्ञया विहितधर्मवर्धनो
    भवताद् भवान् ‡क्षितिजयान्वितोऽचिरात् ॥ ३० ॥

जनकश्चिकीर्षति मखं विलोकितुं
    तमहं व्रजामि मिथिलाभिधां पुरीम् ।
धनुरैश्वरं त्वमपि तत्र वीक्षितुं
    समुपेहि पार्थिवसुत! क्षणादिति ॥ ३१ ॥

अथ निर्ययौ मुनिवरस्तपोवना-
    न्मिथिलापुरं प्रति सरामलक्ष्मणः ।

---

* जनकस्य पितुः अथच तन्नामकस्य विदेहराजस्य आज्ञया । ‡ क्षितिजयान्वितः महीविजयोपेतः अथच सीतोपेतः ।

अनुजग्मुरध्वनि सुदूरमाकुला
हरिणार्भकाः परिचिताश्चिरेण तम् ॥ ३२ ॥

विषयान् पुराणि विपिनानि पर्वतान्
सरितः सरांसि च विलङ्घ्य ते जवात् ।
वसुपालितां वसुमतीं प्रपेदिरे
धनधान्यरत्नपशुजालसंकुलाम् ॥ ३३ ॥

कथयन् कुशान्वयचरित्रमद्भुतं
मुनिपुङ्गवो रघुवराय सादरम् ।
अचलाधिराजतनयामुदन्वतो
महिषीमवाप मरुतां तरङ्गिणीम् ॥ ३४ ॥

अवदन्मुनिस्तदनु दिव्यवाहिनी-
चरितं बुभुत्सति नरेन्द्रनन्दने ।
तनयाद्वयं हिमवतोऽभवत् तयोः
प्रथमां नदीं सुरगणोऽनयद् दिवम् ॥ ३५ ॥

स्मरशासनाय तनयां कनीयसीं
प्रदिदेश हर्षभरितो महीधरः ।
शिवयोश्चिरं मिलितयोः परस्परं
धरणी बभार खलु वीर्यमाहितम् ॥ ३६ ॥

ज्वलने क्षमा सपदि वोढुमक्षमा
विससर्ज तत् स च सुधान्धसां पुनः ।
निदधे जवात् सरिति सा च तीरभू-
प्रभवे जहौ शरवणे हिरण्मये ॥ ३७ ॥

अजनिष्ट तत्र किल धाम षण्मुखी-
परिपीतभव्यरसकृत्तिकास्तनम्।
दनुजावलीदलनकेलिसादरं
प्रणतार्तिभञ्जनकलाविशारदम्॥ ३८॥

अथ राघवे कथमगाहत क्षितिं
विबुधापगेति विनयेन पृच्छति।
उपचक्रमे निगदितुं मुनिर्मरु-
त्सरितोऽवतारचरितं यथाक्रमम्॥ ३९॥

अजनिष्ट कश्चन पुरा धरापतिः
सगराभिधस्तरणिवंशभूषणम्।
स विधित्सुरध्वरशिखामणिं हयं
विससर्ज धन्विनिकुरुम्बरक्षितम्॥ ४०॥

अथ कीर्तिसञ्चयमिवावनीपते-
र्हरिदन्तरेषु कृतचङ्क्रमक्रमम्।
हरति स्म धन्विनिवहैरलक्षितो
हयपुङ्गवं मखभुजामधीश्वरः॥ ४१॥

हयरत्नमध्वनि विनष्टमञ्जसा
हयरक्षिणः क्षितिभुजे न्यवेदयन्।
स च मार्गणाय तुरगस्य सत्वरं
निखिलेन पुत्रनिवहानचूचुदत्॥ ४२॥

सरितः सरांसि विपिनानि पर्वतान्
विषयान् पुराणि विविधाश्च मेदिनीः।

सहसा विचित्य ददृशुर्न कुत्रचित्
सगरात्मजा हयहयापहारिणौ ॥ ४३ ॥

अहरत् तुरङ्गमयमेष मोषक-
स्तुरगस्य वाजिनमसावचूचुरत् ।
इति जघ्नुरध्वनि समस्ततो जनां-
श्चरतः क्रुधा सगरभूपतेः सुताः ॥ ४४ ॥

क्षितिमण्डले तमनवेक्ष्य वाजिनं
विचिचीषवस्तदनु ते रसातले ।
अवदारणं विदधिरे तथा क्षितेः
स्थितिमाशशाङ्करवि तद्यथा भजेत् ॥ ४५ ॥

अथ ते निमीलितविलोचनं शनै-
रवलोकयन्तमधिचित्तमीश्वरम् ।
विलुलोकिरे कपिलमुग्रतेजसं
तुरगं च तस्य विचरन्तमन्तिके ॥ ४६ ॥

अयमत्र तिष्ठति तुरङ्गतस्करो
लघु बध्यतां झटिति वध्यतामिति ।
कटुभाषिणः कपिलरोषपावके
सुमतेः सुताः शलभतां प्रपेदिरे ॥ ४७ ॥

समचोदयत् तदनु वाजिलिप्सया
सगरोंऽशुमन्तमसमञ्जसम्भवम् ।
स च तान् निरीक्ष्य भुवि भस्मसात्कृतान्
सलिलं प्रदातुमुदयुङ्क्त दुःखितः ॥ ४८ ॥

अमरापगाजलनिवापतो गतिः
सुलभा भवति पितृकुलस्य नान्यतः ।
भज यत्नमङ्ग! कुलदीप! तत् स्वयं
सुरनिम्नगानयनकर्मणि द्रुतम् ॥ ४९ ॥

इति वैनतेयवचसा जलाञ्जलौ
शमितादरः प्रतिनिवृत्य वाजिना ।
निरवर्तयन्निजपितामहक्रतुं
स महीं ररक्ष च वनं गते नृपे ॥ ५० ॥

स दिलीपनाम्नि तनुजे धुरं क्षिते-
र्निदधेऽभजच्च तपसे तपोवनम् ।
स भगीरथे निजसुते महारथे
विनिवेश्य भारमवनेर्वनं ययौ ॥ ५१ ॥

चरितं निशम्य सगरात्मजन्मनां
विनिवेश्य च क्षितिधुरां स मन्त्रिषु ।
अवतारणाय सरितः सुपर्वणां
चरितुं समारभत दुश्चरं तपः ॥ ५२ ॥

तपसा प्रसन्नमवनीपतिर्मरु-
त्तटिनीमयाचत सरोजविष्टरम् ।
स च वाहिनीमनुशशास तां पुन-
स्त्वमलङ्कुरुष्व तरसा रसामिति ॥ ५३ ॥

क्षितिपं जगाद सुरवाहिनी स्मयात्
त्वमितो निवर्तय मनो मनोरथात् ।

अवलोकयेऽद्य तमहं न कुत्रचि-
ज्जवमुद्भटं जगति यः सहेत मे ॥ ५४ ॥

तदनु स्मयं शमयितुं विधिर्मरु-
त्सरितोऽवदत् क्षितिपते! त्वमञ्जसा ।
तपसा प्रसादय कपर्दिनं स ते
फलितं करिष्यति मनोरथद्रुमम् ॥ ५५ ॥

इति चोदितो नरपतिः स्वयम्भुवा
तपसा प्रसन्नमकरोत् पिनाकिनम् ।
धरणीभुजे त्रिदिवसिन्धुधारणं
प्रभुणा च तेन दयया प्रतिश्रुतम् ॥ ५६ ॥

अपतत् सगर्वभरमभ्रवाहिनी
हरमूर्ध्नि तं झटिति हर्तुमुद्यता ।
समशिश्रियत् स्वयमदृश्यतां जटा-
पटले भ्रमीर्विदधती चिरं प्रभोः ॥ ५७ ॥

सुरनिम्नगां क्षितिपुरन्दरस्तुतो
विससर्ज बिन्दुसरसि स्मरान्तकः ।
अभवंस्ततः सपदि सप्त सिन्धवः
शरदिन्दुकुन्दघनसारबन्धवः ॥ ५८ ॥

अथ तासु वासवहरिद् विभूषिता
तिसृभिर्दिशा च तिसृभिः प्रचेतसः ।
रथमन्वगात् सपदि काचिदापगा
सजवं भगीरथमहीशतक्रतोः ॥ ५९ ॥

लघु जह्नुरध्वरभुवं विनुह्नुता-
मवलोक्य दिव्यसरिता ज्वलन् रुषा ।
पिबति स्म तां क्षितिभुजा सपीडितो
विजहौ पुनः श्रवणवर्त्मना क्षणात् ॥ ६० ॥

जलसेकशुद्धनिजदेहभस्मनो
नरपालनिर्मितनिवापकर्मणः ।
त्रिदिवातिथीन् सगरजान् विधाय ता-
नभजत् सुपर्वसरिदम्भसां निधिम् ॥ ६१ ॥

पुरमाससाद सुरलोकवाहिनीं
तपसा विधाय नरलोकवाहिनीम् ।
रथमास्थितः सरभसं महारथ-
श्चरितार्थतामधिगतो भगीरथः ॥ ६२ ॥

इति राघवौ मुनिमुखेन्दुनिःसृतां
परिपीय निर्जरनदीकथासुधाम् ।
*वसता चिरादधिविशालमादरा-
दभिपूजितौ सुमतिना महीभुजा ॥ ६३ ॥

अभजन्त ते तदनु कञ्चिदाश्रमं
सुरराजदुश्चरितगूढसाक्षिणम् ।
शिथिलोटजं द्विरदभग्नपादपं
चिरलुप्तकुम्भजलसेकवल्लिकम् ॥ ६४ ॥

---

* 'वसता' इत्यस्य स्थाने 'मुदितौ' इति पाठ्यं भाति ।

अथ तत्र गौतमकलत्रसंश्रयां
मुनिपुङ्गवे कथयति स्वयं कथाम् ।
उदभूत् तपोधनवधूः शिलात्मता-
मपहाय राघवपदार्पणक्षणात् ॥ ६५ ॥

अजनिष्ट गौतमवधूविनिर्मितौ
रघुवीरपादरज एव कारणम् ।
सुधियो रजः सकलसर्गकारणं
प्रवदन्ति यद् भवति किं तदन्यथा ॥ ६६ ॥

रघुनाथपादरजसामनुग्रहा-
दखिलैः क्षणादवयवैः समुज्झितम् ।
उपलत्वमुच्चतरकर्कशस्तन-
द्वयमन्तरेण मुनियोषितोऽद्भुतम् ॥ ६७ ॥

द्रुतमागतेन निजमाश्रमं वधू-
सहितेन दीर्घतपसाभिपूजिताः ।
अभजन्त ते निखिलसम्पदां पदं
मिथिलाभिधां जनकपालितां पुरीम् ॥ ६८ ॥

उत्पन्ना वसुधातलादिह वरा सीताभिधा कन्यका
किञ्च ब्रह्मविदां शिखामणिरिह क्षोणीपतिर्वर्तते ।
अत्रास्ते खलु चण्डमन्तकरिपोः कोदण्डमित्यादराद्
रामस्तां नगरीमवैक्षत मणिप्रासादरुद्धाम्बराम् ॥६९॥

यं सूनुं जनयाम्बभूव माहितः श्रीलोकनाथः सुधीः
ख्यातं चक्रकविं सतीसमुदयैः सम्मानिताम्बाभिधा ।
सर्गस्तस्य कृतौ निरर्गलगिरश्चेरावनीवासव-
श्लाघासीमनि जानकीपरिणये तुर्योऽतिवर्योऽजनि ॥७०॥

इति जानकीपरिणये

चतुर्थः सर्गः ।

---

## अथ पञ्चमः सर्गः ।

अथ राघवदर्शनोत्सुकाः
प्रमदाः सौधगवाक्षनिर्गतैः ।
विशिखा विदधुः सतोरणा
मिथिलायां निजलोचनांशुभिः ॥ १ ॥

किमिमौ मधुपुष्पसायकौ
किमिमौ निर्जरसां चिकित्सकौ ।
किमिमौ हरिणाङ्कभास्करा-
विति तौ पौरजनाः शशङ्किरे ॥ २ ॥

विधिवज्जनकप्रणीतया
समतुष्यत् स महर्षिरर्चया ।
सुजनैः स्वयमादरेण यत्
क्रियते तत् कुरुते मुदं सताम् ॥ ३ ॥

रघुनन्दनरूपदर्शन-
प्रभवानन्दनिमग्नमानसः ।
तमपृच्छदिदं धराधिभू-
रुपविष्टं कुशविष्टरे मुनिम् ॥ ४ ॥

मुनिपुङ्गव! शंस काविमौ
सुखयन्तौ हृदयानि दारकौ ।
वियदध्वचरौ मणिक्षिता-
विह दस्रौ प्रतिबिम्बिताविव ॥ ५ ॥

निजरूपनिरस्तमन्मथौ
भुजतेजोविजितप्रभाकरौ।
गतिधिक्कृतगन्धसिन्धुरौ
मतिनिर्धूतमरुत्पुरोहितौ ॥ ६ ॥

प्रचलत्तपनीयकुण्डलौ
मुखभासा जितचन्द्रमण्डलौ।
शतपत्रसमानलोचनौ
वचसा माक्षिकगर्वमोचनौ ॥ ७ ॥

जनचित्तहरस्फुरद्रुचौ
नवजीमूतसमुल्लसत्कचौ।
समुपस्थितयौवनावुभौ
तनुमन्माधवचित्तभूनिभौ ॥ ८ ॥

भुवनत्रयरक्षणे क्षमौ
युवकण्ठीरवचण्डविक्रमौ।
खलनिग्रहणोत्सुकौ क्षिता-
ववतीर्णौ त्रिदिवादिवामरौ ॥ ९ ॥

(पञ्चभिः कुलकम्)

किमुभौ सुरराजनन्दना-
वुत गन्धर्वपतेः कुमारकौ।
अथवा निजयानरंहसा
भुवि सिद्धौ वियदध्वनश्च्युतौ ॥ १० ॥

स्फुरति स्फुटमेनयोरयं
कतरः श्यामलकोमलच्छविः।

तरसा हृदयं विलीयते
 दृढमस्मिन् परमात्मनीव मे ॥ ११ ॥

अपरो द्रुतहाटकप्रभो
 विनयी कुञ्चितनीलकुन्तलः ।
वयसा गुणतः प्रमाणतः
 सदृशस्तस्य चकास्ति नन्वसौ ॥ १२ ॥

विविधेषु कुलेषु जन्मना
 कुलमाभ्यां किमभूदलङ्कृतम् ।
समसूत च कः पुमानिमौ
 जलधिः कौस्तुभकल्पकाविव ॥ १३ ॥

भुवने पदयोः कयोरिमा-
 वदधातामभिधेयतामुभौ ।
भुवमाचरतां किमात्मनोः
 पदविन्यासपवित्रितामिमाम् ॥ १४ ॥

इति संसदि तेन गाधिभू-
 रनुयुक्तो धरणीबिडौजसा ।
अवदत् तमकद्वदो मुनिः
 स्मितभासा जितचन्द्रदीधितिः ॥ १५ ॥

मनुवंशमणी महाभुजौ
 तनयौ पङ्क्तिरथावनीभुजः ।
प्रथितौ भुवि रामलक्ष्मणा-
 विति सर्वास्त्रविशारदाविमौ ॥ १६ ॥

निजघान शितेन ताटकां
विशिखेन प्रथमोऽयमेनयोः ।
अवधीच्च सुबाहुमम्बुधे-
र्लघु मारीचमपातयज्जले ॥ १७ ॥

निजपादपरागपावित-
प्रमदासङ्गतगौतमार्चितः ।
विलुलोकिषयैव धूर्जटे-
र्धनुषः सत्त्वनिधिः समागतः ॥ १८ ॥

अयि दर्शय चापमैश्वरं
रघुवीराय विदेहभूपते!।
तदसौ पुनराततज्यतां
भुजवीर्येण रयेण नेष्यति ॥ १९ ॥

धनुरस्तु तदैन्दुशेखरं
नरपालैरपरैर्दुरानमम् ।
तदयं स्ववशं करिष्यति
प्रसभं सर्पमिवाहितुण्डिकः ॥ २० ॥

धनुषोऽयममुक्तशैशवः
कथमारोपणमाचरिष्यति ।
इति चेदयि शङ्कसे श्रुता
न कथा वामनसंश्रया त्वया ॥ २१ ॥

भुजवीर्यममुष्य शाम्भवे
धनुषि व्यक्ततरं भविष्यति ।

वितरिष्यति वीर्यशुल्कतो
मुदितोऽस्मै तनयां भवानपि ॥ २२ ॥

इति शंसति संसदि द्विजे
जनकश्छिन्नसमस्तसंशयः ।
धनुरानयनाय पार्श्वगान्
पुरुषान् प्रेषयति स्म भूरिशः ॥ २३ ॥

अथ ते विशिखासनं घनं
धरणीपालसभे तदानयन् ।
सुरराजशरासनप्रभं
भुजगाधीश्वरभोगभीषणम् ॥ २४ ॥

धनुरुग्रतरं तदग्रही-
दनयच्च द्रुतमाततज्यताम् ।
विचकर्ष च विस्मयान्वितान्
विदधानो रघुनन्दनो जनान् ॥ २५ ॥

दलितात् तदमन्दघर्षणा-
द्धनुषोऽजायत भैरवो रवः ।
विपुलेषु दिगन्तदन्तिनां
श्रुतिरन्ध्रेषु पदं समर्पयन् ॥ २६ ॥

इति दर्शितवीर्यसम्पदं
रघुवीरं पुरभिच्छरासने ।
प्रशशंस तरङ्गितो मुदा
जनकः संसदि सत्यसङ्गरः ॥ २७ ॥

अथ राजनिदेशतः सखी-
निकुरुम्बैः सममायती सभाम् ।
रघुनाथविलोचनातिथि-
र्मिथिलाधीशसुता बभूव सा ॥ २८ ॥

रुचिशालि पुरैव यद्वपुः
पुनरुक्ताभमभूत् सयौवनम् ।
स्वत एव हि रत्नमुल्लसद्-
द्युति शाणोल्लिखितं तु किं पुनः ॥ २९ ॥

निखिलावयवा धराभुवो
निजसौन्दर्यसुधापयोनिधौ ।
रघुवंशमणेरमज्जयन्
द्वयमक्ष्णोरनिमेषमादरात् ॥ ३० ॥

समता कथमस्तु यत्कचै-
रलिनां निन्दितचारुचामरैः ।
भजतां कुसुमौघमन्वहं
कुसुमौघेन सदा निषेवितैः ॥ ३१ ॥

अभिभूतमभूद् घनश्रिया
ननु यत्केशभरेण चामरम् ।
अत एव तदन्वितं ह्रिया
चमरीपृष्ठत एव तिष्ठति ॥ ३२ ॥

दधतानिशमेकरूपतां
तुलितोऽयं निटिलेन चन्द्रमाः ।

भविता क्षयवृद्धिवर्जितः
स चतुर्थीगत एव चेत् सदा ॥ ३३ ॥

अपि यं प्रतिपद्गतं जनो
नमतीन्दुं गतदोषमादरात् ।
यदलीकरुचेर्मलीमुचं
न चतुर्थीगतमीक्षते हि तम् ॥ ३४ ॥

वदनं वनिताशिखामणे-
र्विरराजान्वयि रेखया भ्रुवोः ।
दयितेन रतेः सुधाकरः
सुहृदा न्यस्तमिवोद्वहन् धनुः ॥ ३५ ॥

विललास यदानने सुधा-
सरसि भ्रूर्लसदञ्जनच्छविः ।
स्फुटमुच्चलितेव वीचिका
नवशैवालकुलेन सङ्कुला ॥ ३६ ॥

क्षयमुज्झति नो न लक्ष्मणा
रहितो भाति न वा दिवानिशम् ।
अमुखावयवो मुखेन तत्
सदृशः स्यात् सुदृशः कथं शशी ॥ ३७ ॥

अजयत् स्वयमब्जयो* र्द्वयं
युगली लोचनयोर्न केवलम् ।

* अब्जयोः पद्मयोः, अथच पद्मचन्द्रयोः ।

अपि निर्भरविभ्रमावली-
　　सदनं तद् वदनं नतभ्रुवः ॥ ३८ ॥

भजता श्रवणावतंसतां
　　ध्रुवमन्ते वसता सदा दृशोः ।
सुषमाधिगता सुखादभू-
　　दसिताब्जेन धरातनूभुवः ॥ ३९ ॥

रमणीमणिकर्णपाशयो-
　　र्विरराज प्रचुरश्रियोर्द्वयी ।
युगली परिवेषयोरिव
　　स्फुटताटङ्कसुधांशुबिम्बयोः ॥ ४० ॥

सुदतीशुभकर्णकुण्डल-
　　स्फुरदुद्दाममणीगणश्रियः ।
अभजन्त कपोलमण्डली-
　　‡मधि कर्णे क नु भूषणश्रियः ॥ ४१ ॥

मकरेण बभौ मनःशिला-
　　कलितेन क्षितिभूकपोलभूः ।
मुकुरो मकराङ्कमुद्रितः
　　कथयन्मान्मथतामिवात्मनः ॥ ४२ ॥

वनितामणिनासिका ध्रुवं
　　शरधिः पुष्पशरस्य काञ्चनी ।

‡ अधि कर्णे श्रोत्र इत्यर्थः । 'अधिपरी अनर्थकौ' (१. ४. ९३) इति अधेः कर्मप्रवचनीयता । अथच अधिकर्ण इत्येकं पदम् । अधिकम् ऋणं यस्य तास्मिन् ऋणग्रस्ते जने इति तदर्थः ।

तत उच्चलिताः ससौरभा
　　बहवः श्वासमया यदाशुगाः† ॥ ४३ ॥

§तुलितः सुधया सह ध्रुवं
　　सुदतीदन्तपटः स्वयम्भुवा ।
अधरत्वमवाप गौरवा-
　　दधरं तत् कथयन्ति तं जनाः ॥ ४४ ॥

सुहितानतनिष्ट यः पुरा
　　सुधया निर्जरसः पुरं गतम् ।
विदधे क्षितिजाधरं विधिः
　　सुधया तर्पयितुं तमच्युतम् ॥ ४५ ॥

दधतः परिमृष्टरागता-
　　मपि मुख्या द्विजभावमाश्रिताः ।
शुचयोऽधिगताश्च दान्ततां
　　ननु मुक्ताः प्रमदामणे रदाः ॥ ४६ ॥

शुभदन्तजवर्णसम्पदा
　　युवतेर्मौक्तिककुन्दनिर्जयात् ।
अतुलत्वजुषापि यद् दधे
　　*सतुलत्वं न किमेतदद्भुतम् ॥ ४७ ॥

सुतनोर्मुखभाषितस्मितै-
　　र्विजिताश्चन्द्रसुधौघचन्द्रिकाः ।

† आशुगा वायवो बाणाश्च ।　§ तुलायामारोप्य परीक्षित इत्यर्थः ।　* सकारतवर्णलकारात्मकत्वमिति विरोधपरिहारः ।

अमिलन्नधिकेन कुत्रचिद्
　　विजितानामुचितं हि मेलनम् ॥ ४८ ॥

अतनिष्ट समध्यमां सितां
　　वचनं केन* वसुन्धराभुवः ।
अकरोच्च मरन्दमञ्जसा
　　निजमाधुर्यभरैरमध्यमम् ॥ ४९ ॥

महिलास्वरमाधुरीं यदा
　　कपटेनापजहार वल्लकी ।
सुधियः परिवादिनीं तदा-
　　प्रभृति क्षोणितले वदन्ति ताम् ॥ ५० ॥

कवयश्चिबुकं कथं धरा-
　　तनुजायाः कथयन्ति निस्तुलम् ।
अनिशं दधदात्मनस्तुलां
　　प्रतिबिम्बस्य च भासुरश्रियः ॥ ५१ ॥

रमणीरमणीयकण्ठतो
　　हृतलक्ष्मीः समयं विलोकयन् ।
ननु निर्गमनेषु भूभुजां
　　पुरतः क्रोशति कम्बुरुच्चकैः ॥ ५२ ॥

युवतेः करभूषिताञ्चला
　　दधती कोमलतां भुजद्वयी ।

---

* केन अज्ञातेन कारणेन, अथच ककारेण ।

विरराज शिरीषमालिका-
युगलीवाग्रनिबद्धपल्लवा ॥ ५३ ॥

अजनिष्ट करेण मेदिनी-
तनुजाया जलजं विनिर्जितम् ।
तमसेवत तन्निरन्तरं
ननु †लेखात्मकतामतोऽवहत् ॥ ५४ ॥

मिथिलावनिपालकन्यका-
कुचपङ्केरुहकुड्मलद्वयी ।
न कदापि विकासमासदद्
वदनेन्दोरिव सान्निधानतः ॥ ५५ ॥

अभिषेक्तुमनल्पविष्टप-
त्रयराज्ये रतिपुष्पसायकौ ।
नवयौवनशिल्पिना ध्रुवं
कलितौ हेमघटौ वधूकुचौ ॥ ५६ ॥

धरणीमघवत्कुमारिका-
स्तनयोः सङ्गतयोरहर्निशम् ।
रजनीष्वपि चक्रवाकयो-
र्मिथुनं चेन्मिलितं समं भवेत् ॥ ५७ ॥

सुषमामृतपूरपूरिते
सुमुखीनाभिबिलेऽधियौवन म्

---

† पद्मरेखात्मकत्वं देवात्मकत्वं च ।

असिता भुजगी तदुद्गता
नियतं रोमलतापदेशतः ॥ ५८ ॥

स्फुटया नवरोमरेखया
क्षितिजामध्यवियत्प्ररूढया ।
पिशुनेन निशाचरावली-
विपदोऽभूयत धूमकेतुना ॥ ५९ ॥

मणिभूषणभूषितानि य-
न्निखिलाङ्गानि निरीक्ष्य यौवनम् ।
अकरोदुदरं धराभुव-
स्त्रिवलीकाञ्चनभूषणाञ्चितम् ॥ ६० ॥

जगतो यदुवाच गौतमः
परमाणुं समवायिकारणम् ।
अणुता नियतं तदुद्भवे
समभूद् भूमिसुतावलग्नके ॥ ६१ ॥

मणिकाञ्चिमयूखशैवले
वलिसोपानपथे पदार्पणात् ।
अपतञ्जनलोचनानि भू-
तनुभूनाभिसरोवरे मुहुः ॥ ६२ ॥

अभजन्त गभीरतास्पदे
प्रमदानाभिबिलेऽन्धकारताम् ।
अवलग्ननिबद्धमेखला
विलसज्जम्भभिदश्मरश्मयः ॥ ६३ ॥

दृढमात्मपटुत्वमक्षर-
च्युतके किं विववार यौवनम् ।
जघनं विदधे घनं यत-
स्तनुजाया मनुजाधिभूमणेः ॥ ६४ ॥

कुचयोर्युगमेव केवलं
न करोति स्म रथाङ्गविभ्रमम् ।
दुहितुर्धरणीबिडौजसो
विपुलं तच्च नितम्बमण्डलम् ॥ ६५ ॥

घनपङ्कभरेण रूषितो
यदि जम्बूसरिदम्बुखेलने ।
वलभित्करिणः करो व्रजेत्
सुदतीपीततरोरुचारुताम् ॥ ६६ ॥

मृदुशीतलमूरुरम्भयो-
र्द्वयमाश्लिष्य दृढं चलभ्रुवः ।
हरलोचनपावकार्चिषा
जनितं तापभरं जहौ स्मरः ॥ ६७ ॥

स्मरयौवनयोः सचापयोः
कुटिलभ्रूयुगलेन योषितः ।
अतनोदिषुधिद्वयश्रियं
युगलं वल्गु तदीयजङ्घयोः ॥ ६८ ॥

क्षितिपालसुतापदद्वयं
युगलं नीरजयोरसंशयम् ।

मधुरस्वरहंसकस्थितिः
परथा तत्र कुतो भवेत् सदा ॥ ६९ ॥

केशादारभ्य पादावधि नलिनमुखीमेवमेषोऽनिमेषं
पश्यन् सानन्दमुच्चैः स्मरपरवशतां चेतसा संश्रितोऽपि ।
कुर्वन्नाकारगुप्तिं रघुकुलतिलकः सन्निधाने महर्षे-
स्तस्थौ रोमाञ्चपुञ्जैः समजनि विवृता चित्तवृत्तिस्तदीया ॥७०॥

यं सूनुं जनयाम्बभूव महितः श्रीलोकनाथः सुधीः
ख्यातं चक्रकविं सतीसमुदयैः संमानिताम्बाभिधा ।
सर्गोऽसौ जनकात्मजापरिणये नव्ये तदीये महा-
काव्ये चारुणि रुक्मिणीपरिणयभ्रातर्यभूत् पञ्चमः ॥ ७१ ॥

इति जानकीपरिणये

पञ्चमः सर्गः ।

---

## अथ षष्ठः सर्गः ।

अथ सुतां प्रणमय्य तपस्विने
  जनकभूमिपतिस्तदनुज्ञया ।
दशरथानयनाय पुरोहितं
  सपदि संप्रहितो* धरणीसुरम् ॥ १ ॥

स खलु यावदवाप न मेदिनी-
  शतमखं जनकस्य पुरोहितः ।
उपहरन् कुसुमानि सिषेविषु-
  स्तमिव तावदभून्मधुवासरः ॥ २ ॥

समसमुन्मिषितैः कुसुमोत्करै-
  र्मलयशैलभवैर्मरुदर्भकैः ।
श्रुतिसुखैरपि कोकिलकूजितै-
  रनुमितस्तरसा समभून्मधुः ॥ ३ ॥

अधिगतस्य दिशं शमनास्थितां
  स्फुटमुदेति निरूष्मलता मम ।
इति विचिन्त्य खरांशुरुपेक्ष्य ता-
  मुदचलद् धनदस्य दिशं प्रति ॥ ४ ॥

मलयनिर्झरशीकरशीतलो
  मुषितपाण्ड्यवधूकचसौरभः ।

---

* कर्तरि क्तः ।

निबिडचोलविलासवतीस्तन-
स्खलनमन्दगतिर्मरुदाववौ ॥ ५ ॥

प्रचलपल्लवकेतुपटाञ्चला
भ्रमरराजिमनोहरतोरणाः ।
मधुझरोदकसिक्ततरा बभु-
र्मधुसमागमने वनवीथयः ॥ ६ ॥

मलयशैलभवेन नभस्वता
रचितगाढलसत्परिरम्भणा ।
समजनिष्ट लतावलिरुन्मिष-
न्मुकुलपालिमिषात् पुलकान्विता ॥ ७ ॥

तुवरचूतनवाङ्कुरचर्वणाद्
विशदकण्ठपुटा पिकमण्डली ।
श्रवणयोर्निजकोमलपञ्चम-
स्वरमिषेण ववर्ष सुधाझरीम् ॥ ८ ॥

मधुसखोऽधिगतो विपिनस्थलीं
कुसुमभारनमत्तरुमण्डलाम् ।
विशिखशून्यतरामिषुधिं चिराद्
विकचपुष्पशरैः समपूरयत् ॥ ९ ॥

मधुरसं परिपीय वनेषु तं
बहुतयान्तरमान्तमिवोद्गिरन् ।
मधुरनादमिषाद् भ्रमरोत्करः
कुसुमितां वनभूमिमभूषयत् ॥ १० ॥

सुरभिलो वकुलप्रसवोद्गल-
न्मधुरसस्नपितो मलयानिलः ।
रतिपतेः पथिकासुसमीरण-
ग्रहणदीपकभावमशिश्रियत् ॥ ११ ॥

प्रियजनेन चिरेण पिपासितं
विरतमञ्जुलवेणु चलद्भ्रुवाम् ।
अधरबिम्बमजायत चुम्बन-
क्षममपेतहिमोपहितव्रणम् ॥ १२ ॥

प्रमदया खलु यः प्रियदुर्लभैः
स्फुटमपूजि यदा पदताडनैः ।
भुवि तदाप्रभृति प्रमदाञ्चितं
तरुमशोक इति प्रवदन्ति तम् ॥ १३ ॥

स किल धन्यतमस्तरुषु द्रुमो
युवजनेन चिरादभिकाङ्क्षितम् ।
सपदि यः समशिश्रियदङ्गना-
घनतरस्तनमण्डलघट्टनम् ॥ १४ ॥

विविधरत्नमयूखविराजित-
त्रिदिववर्त्मसु सद्मसु सत्स्वपि ।
उपवनेषु रतिः समभून्मधौ
विकचपुष्पचयेषु विलासिनोः ॥ १५ ॥

भ्रमरलोचनमुत्थितमुच्चकैः
किमहितः शिशिरो गतवानिति ।

सरसि तद्विलुलोकिषयाब्जिनी-
मुखमिवोन्नमितं जलजं बभौ ॥ १६ ॥

अथ सुखादनुभूय ऋतूत्सवा-
नुपवनेषु समं प्रमदाजनैः ।
क्षितिमहेन्द्रमवाप सभागतं
जनकराजपुरोहितभूसुरः ॥ १७ ॥

क्षितिभुजा विधिवद् विहितार्चनः
समुपविश्य सुखं कुशविष्टरे ।
इदमुदीरयति स्म तदाशयं
प्रमदमेदुरमाकलयन् द्विजः ॥ १८ ॥

अयि भवन्तमपृच्छदनामयं
जनकभूमिपतिर्जगतीपते ! ।
पुनरुदीरयति स्म च तद्वचः
शतमखस्य सखे! शृणु मन्मुखात् ॥ १९ ॥

तनुभुवा भवतो धनुरैश्वरं
दलयता विजिताजनि मे सुता ।
त्वमुभयोरमुयोरनुरूपयो-
रनुमनुष्व विवाहमिहागतः ॥ २० ॥

इति भवन्तमभाषत मैथिलो
नरपतिर्भवदागमनोत्सुकः ।
कलय तस्य मनोरथभूरुहं
सफलमागमनेन धरापते! ॥ २१ ॥

इति तदाननचन्द्रसुधां गिरं
श्रुतिपुटेन निपीय विशां पतिः ।
सरयमोमिति वाचमुदीरय-
ञ्जिगमिषामभजन्मिथिलां प्रति ॥ २२ ॥

अथ समाप्य विधिं निखिलं सुधी-
र्दिनमुखोचितमह्नि शुभंयुनि ।
जवनवाजियुतं रथमास्थितो
दशरथो मिथिलामभि निर्ययौ ॥ २३ ॥

जिगमिषोर्नरपालशिखामणे-
रुदचलत् पटहध्वनिरुच्चकैः ।
विघटिताचलसन्धिरनुक्षण-
क्षुभितसागरमन्द्ररवैधितः ॥ २४ ॥

रचितमक्षिपिधानमहिद्विषो
रजसि नेत्रनिरोधिनि जृम्भिते ।
अपिदधे किमहिप्रभुरुत्थिते
श्रुतिकटौ पटहारटिते दृशः ॥ २५ ॥

तदनु लाजचयैः समवाकिरन्
क्षितिपतिं किल पौरपुरन्ध्रयः ।
नभसि नीरदसंहतयो धरा-
धरमिवाभिनवैरुदबिन्दुभिः ॥ २६ ॥

उपरि भूमिपतेर्द्रुतमुद्धृतं
विशदमातपवारणमाबभौ ।

उदयभूमिधरोपरि सत्वरं
　　कुमुदिनीपतिबिम्बमिवोदितम् ॥ २७ ॥

उभयपार्श्वगते धरणीपते-
　　र्विलसतः स्म शुभे सितचामरे ।
निजभुजायुगलेन समार्जिते
　　तनुमती यशसी इव पाण्डरे ॥ २८ ॥

क्षितितलाद् द्रुतमुच्चलिताम्बरे
　　प्रविलल्लास परागपरम्परा ।
वसुमतीव नरेन्द्रवरूथिनी-
　　श्रियमिवेक्षितुमुच्चपदं गता ॥ २९ ॥

मणिमयीः पिहिताः प्रतिसीरया
　　प्रसभपूरित(?)पूरुषसंहतीः ।
अधिगताः शिबिकाः धरणीपते-
　　रुदचलन्नवरोधवधूजनाः ॥ ३० ॥

उपरि केतुभिरुल्लिखिताम्बरा-
　　श्चटुलचक्रविदारितभूतलाः ।
घनतरध्वनिरुद्धदिगन्तराः
　　समवलन्त शताङ्गचया रयात् ॥ ३१ ॥

भुजगलोकतमोभिरिवोद्गतै-
　　र्जलभरादिव खात् पतितैर्घनैः ।
अचलतामपहाय समागतैः
　　क्षितिधरैरिव हस्तिचयैर्ययै ॥ ३२ ॥

नभसि दुःखतरं विचरन्तु मा
दिनमणेस्तुरगा निजबन्धवः ।
इति चमूतुरगैः प्रहिता ध्रुवं
खुररजोमिषतः क्षितिरुच्चकैः ॥ ३३ ॥

करलसन्मुसलासिलताधनुः-
परिघतोमरशक्तिपरश्वधाः ।
दृढविशङ्कटकङ्कटधारिणः
प्रययुरुद्भटशौर्यभुजा भटाः ॥ ३४ ॥

विघटिताखिलपर्वतसन्धिनि
प्रसभकम्पितभूमितले बले ।
चलति भारनतैः फणमण्डलै-
र्भुवमधत्त कथञ्चन भोगिराट् ॥ ३५ ॥

विसृमरैरनुलोममरुच्चल-
ध्वजपटप्रभवैः पवनैर्मुहुः ।
द्रुतविनीततरश्रमखेचरा
दशरथस्य चचाल वरूथिनी ॥ ३६ ॥

दशरथः समतीतमहापथो
वननदीतटमाप दिनात्यये ।
चरमसानुमतस्तटमंशुमा-
नपि विलङ्घ्य वियत्सरणीं ययौ ॥ ३७ ॥

विपुलतामधिजग्मुषि सन्ततं
त्रिदशवर्त्मनि सञ्चरणादिव ।

अरुणतामधिपादमशिश्रियत्
परिणतौ दिवसस्य दिनेश्वरः ॥ ३८ ॥

निमिषदब्जविनिर्गतया रुचा
दृढतरं परिरब्ध इव क्षणात् ।
कमलबन्धुरभूद् दिवसाञ्चले
स्फुटजपाकुसुमस्तबकोपमः ॥ ३९ ॥

श्रुतिवधूपदपङ्कजयावकै-
र्विगलितैर्निजमण्डलखेलनात् ।
सपदि रञ्जितमूर्तिरिवाबभौ
दिनमणिर्द्रुतहाटकसन्निभः ॥ ४० ॥

मसृणिता घुसृणैरिव दिग्वधू-
र्गिरितटीः §कुनटीभरिता इव ।
किसलयैरछुरितानिव पादपान्
दिनमणेररुणाः किरणा व्यधुः ॥ ४१ ॥

विलपतो मिथुनस्य रथाङ्गयो-
र्विरहविह्वलतामभिवीक्षितुम् ।
दधदिवाक्षमतां दिवसेश्वरः
क्वचिददर्शनमाप दिनात्यये ॥ ४२ ॥

घुसृणयावकविद्रुमदाडिमी-
कुसुमपल्लवलोहितकश्रिया ।

---

§ कुनटी मनश्शिला ।

स्फुटमुपासितया द्विजमण्डलै-
श्चरमया समभूयत सन्ध्यया ॥ ४३ ॥

पिशितकीटफलाङ्कुरतण्डुल-
प्रमुखभक्षणवन्ति यथोचितम् ।
सपदि सायमधिष्ठितमर्भकैः
खगकुलानि कुलायमशिश्रियन् ॥ ४४ ॥

चरमसानुमतः शिखराज्जवा-
ज्जलनिधौ पतिते रविमण्डले ।
सरभसोच्चलितोदकशीकर-
भ्रममुडुप्रकरा विदधुर्दिवि ॥ ४५ ॥

भरितमुग्धटमन्दरघूर्णनो-
च्चलितपायससैन्धवशीकरैः ।
गुरु विडम्बयति स्म वपुर्हरे-
रुडुकदम्बकरम्बितमम्बरम् ॥ ४६ ॥

अनिशसङ्गमशालि रथाङ्गयो-
र्विघटितं कलयन् मिथुनं मिथः ।
न खलु वेद्मि चिरं दिवसात्ययः
क्व नरके निपतिष्यति निर्दयः ॥ ४७ ॥

सरभसं समभूदभिसारिका-
जनाचिरन्तनपुण्यफलं तमः ।
जरठवारवधूपलितासिती-
करणसिद्धरसायनसेवनम् ॥ ४८ ॥

दिनविरामनभस्यघनाघनै-
र्वियदरण्यतमालमहीरुहैः ।
स्मरधरापतिबन्धुरसिन्धुरै-
र्झटिति सन्तमसैरुदभूयत ॥ ४९ ॥

युवतिभिर्विहिता दयितं प्रति
स्मितकटाक्षमुखा निजविभ्रमाः ।
समभवन् वनचन्द्रिकया समा-
स्तमसि नेत्रनिरोधिनि जृम्भिते ॥ ५० ॥

जलनिधेर्जठरात् कुमुदोत्करैः
सह चकोरमनांसि विकासयन् ।
उदयति स्म विधुर्नलिनैः समं
निखिलचक्रमनांसि निमीलयन् ॥ ५१ ॥

मकुटतां प्रथमस्य महीभृतो
वदनतां हरिदिग्वनितामणेः ।
चषकतां पुनरुत्पिबसंहते-*
रवहदुत्पलिनीपतिमण्डलम् ॥ ५२ ॥

कुमुदिनीपरिषत्कुलदैवतैः
कमलिनीसदसामपमृत्युभिः ।
स्मरविलासविजृम्भणहेतुभिः
शशधरस्य विनिःसृतमंशुभिः ॥ ५३ ॥

---

* उत्पिबानां चकोराणां संहतेः ।

विमलतामभजद् भुवनं क्षणात्
कुमुदबन्धुमहःकतकार्पणात् ।
निबिडपङ्क इवास्य घनीभवन्
स्फुटमधः समलक्ष्यत भूतलम् ॥ ५४ ॥

भ्रमरसङ्गमशोभि विपाण्डरं
जलजमाकलयन्नवधीरितम् ।
उडुपतिर्विरराज सलाञ्छनो
दधदिवाङ्कभुवि क्षणदां प्रियाम् ॥ ५५ ॥

इति वियत्सरणौ शशिमण्डले
स्फुरति यामवतीमणिकुण्डले ।
तरुणसंसदभूत् सकुतूहला
युवतिभिः सममासवसेवने ॥ ५६ ॥

चषकमिन्दुमुखीवदनाभिधं
मणिमयाच्चषकादपि कामिनाम् ।
अधिकमिष्टमभून्मधुसेवने
न किमकृत्रिमकृत्रिमयोर्भिदा ॥ ५७ ॥

मुखसुरं भवदीयमपेक्षते
बकुलभूरुह एष नितम्बिनि! ।
इति वदन्तमभीकमपाययद्
युवतिरिङ्गितविद् वदनासवम् ॥ ५८ ॥

विदलतः स्मरगाढविकर्षणाद्
रसमिव स्रुतमिक्षुशरासनात् ।

प्रणयराशिमिव द्रवतां गतं
मधु वधूरभिकाः समपाययन् ॥ ५९ ॥

कलितहासमहेतु चरन्मुहुः-
स्खलितमञ्जुलमस्फुटमालपत् ।
मधुमदे सति यौवतमाबभौ
पुनरिवागतशैशवचेष्टितम् ॥ ६० ॥

मदभरेऽभ्युदिते मधुसेवया
नयनयोर्युगलं कुटिलभ्रुवाम् ।
अजनि घूर्णनवद् वपुषा समं
निबिडरागमभून्मनसा सह ॥ ६१ ॥

मधुरसद्रुतमृष्टघनत्रपा-
कलुषजालतया विशदे सति ।
अभजदब्जमुखीहृदयाम्बरे
झटिति रागभरो दृढलग्नताम् ॥ ६२ ॥

मधुरसेन हिमेन विलासिनोः
प्रविशतान्तरिवाहितसेचनः ।
निबिडया रहितः खलु तन्द्रया
प्रबुबुधे तरसा हृदयेशयः ॥ ६३ ॥

अधिगतान्युपधानसनाथतां
बहुपरिच्छदभाञ्जि मृदूनि च ।
प्रणयिनो रभसादभजन् समं
युवतिभिः शयनानि रिरंसवः ॥ ६४ ॥

रतिपतेरपि विस्मयकारि यद्
विटजनैरपि यन्न विचारितम् ।
कविगिरां च न यत् खलु गोचर-
स्तदुदभूद् वनिताभिकयो रतम् ॥ ६५ ॥

अपहृते रभसेन कुचांशुके
प्रणयिना सुदृशः करयोर्द्वयम् ।
शिशिरघर्मजलैः किल सात्त्विकैः
समभिषिक्तमिवाजनि तत्पदे ॥ ६६ ॥

लघु निरस्य पटं जघनस्थला-
न्निहितचक्षुषि मन्मथमन्दिरे ।
प्रियतमे स्वविलोचनमीलनं
समतनोत् तददर्शनमिच्छती ॥ ६७ ॥

विविधचुम्बनमाचरतो रतौ
प्रणयिनो मधुरत्वमुपागताः ।
वरतनोरधरादविशेषता-
मवयवा निखिलाः समशिश्रियन् ॥ ६८ ॥

विरचिता इव शर्करया सुधा-
रसचिरस्नपिता इव सुभ्रुवः ।
अवयवाः सुरते परिचुम्बिता
विदधिरे दयितस्य न सौहितीम् ॥ ६९ ॥

जलधरैः स्थगितं शशिमण्डलं
नटनशालि युगं च रथाङ्गयोः ।

मरुतहंससमभृत् कमलद्वयं
वपुषि नर्मविशेषपुषि स्त्रियाः ॥ ७० ॥

त्वमसि मे कलभाषिणि ! जीवितं
त्वमसि मे नयनद्वयचन्द्रिका ।
त्वमसि मे निधिसम्पदिति प्रिय-
श्चटुगिरा ममुदं विदधे वधूम् ॥ ७१ ॥

सुरभिनिःश्वसितैरधरामृतै-
स्तनुरुचां निचयै रतिकूजितैः ।
युवतयो निबिडैः परिरम्भणैः
प्रणयिनामहरन् करणावलीम् ॥ ७२ ॥

विषमसायककेलिषु भूषणै-
र्विगलितै रहितं कुटिलभ्रुवाम् ।
नखपदैः कमितुर्दशनक्षतै-
रखिलमङ्गमशोभत भूषितम् ॥ ७३ ॥

विपुलनिःश्वसितप्रचलत्कुचं
गलितभूषणमाकुलकुन्तलम् ।
श्रमपयःकणतारकितं रते-
रवसितौ वनितावपुराबभौ ॥ ७४ ॥

इत्थं स्मरोत्सवसुखं तरुणेषु साकं
कान्ताजनैरनुभवत्सु विभावरी सा ।

लिप्ता सुधाकरकरैर्घनसारगौरै-
　　र्याता निमेषवदमीषु समत्सरेव ॥ ७५ ॥

यं सूनुं जनयाम्बभूव महितः श्रीलोकनाथः सुधीः
　　ख्यातं चक्रकविं सतीसमुदयैः सम्मानिताम्बाभिधा ।
सर्गः षष्ठ इहाजनिष्ट मधुरः श्रीनीलकण्ठाध्वरि-
　　श्लाघासीमनि जानकीपरिणये काव्ये तदीये नवे ॥७६॥

इति जानकीपरिणये

षष्ठः सर्गः ।

---

## अथ सप्तमः सर्गः।

अथाधिभूरुत्तरकोसलानां
तल्पे शयानः शरदभ्रशुभ्रे ।
वैतालिकैरञ्चितवाग्विलासैः
प्रबोधितोऽभूत् क्षणदावसाने ॥ १ ॥

धरामरुत्वन्! विरता निशाभू-
न्निद्रामिमामक्षिगतां जहीहि ।
प्रतीक्षमाणा कमलालया ते
विलोचनाम्भोजविकासमास्ते ॥ २ ॥

पतिष्यतीन्दौ सति तारकाभि-
रन्तर्हितं चन्द्रिकयापयातम् ।
शान्तं निशा मीलितमुत्पलिन्या
क्व भर्तुरार्तौ सुखमाश्रितानाम् ॥ ३ ॥

रथाङ्गयूनां विरहाकुलानां
बाष्पेण निःश्वासमरुद्भवेन ।
किं प्रापितो धूसरतां प्रचेतो-
हरिद्वधूदर्पण एष चन्द्रः ॥ ४ ॥

यस्मिन्नसंकीर्णतया प्रसिद्धि-
र्ह्रस्वस्य दीर्घस्य तथा प्लुतस्य ।
स श्रूयते सम्प्रति वासतेयी-
विरामशंसी पततो विरावः ॥ ५ ॥

उद्यन्ननूरुः प्रसभं तमिस्रं
दूरे समुत्सारयति क्षणेन ।
अम्भोनिधेरम्भ इव प्रयुक्तः
पुरा कुठारो भृगुनन्दनेन ॥ ६ ॥

यावन्न मृष्टं निखिलं तमोऽर्क-
सूतेन यावन्न बहिर्जनेन ।
विनिर्गतं तावदलम्भि गेहं
सङ्केतदेशादभिसारिकाभिः ॥ ७ ॥

सगीति मथ्नन्ति दधीनि गोप-
वध्वश्चलत्केशगलत्प्रसूनाः ।
मुहुर्मुहुः स्रस्तकुचोत्तरीयाः
कराग्रवल्गद्वलयावलीकाः ॥ ८ ॥

विनिद्रपङ्केरुहसान्द्रगन्ध-
धुरन्धरो नर्तितवल्लरीकः ।
आचान्तकान्तासुरतान्तजात-
स्वेदोदको वाति विभातवातः ॥ ९ ॥

त्रयीमयं सुप्तसमस्तलोक-
चैतन्यसंपादनजागरूकम् ।
द्विजव्रजैराकलिताघ्यर्मुच्चै-
रैन्द्रीं दिशं ज्योतिरलङ्करोति ॥ १० ॥

अम्भोरुहैः सार्धमशीतभानु-
रुन्मीलयल्लोँकविलोचनानि ।

नीहारजालेन समं समन्तात्
सान्द्रं तमिस्रं शमयन्नुदेति ॥ ११ ॥

अलक्तकस्येव रसैः प्रसिक्ता
लिप्तेव पङ्कैर्नवकुङ्कुमानाम् ।
कीर्णेव पूर्वाचलधातुचूर्णैः
प्राची नवैरर्ककरैर्विभाति ॥ १२ ॥

बालातपेनोषसि रूषितानि
विभान्ति पङ्केरुहकाननानि ।
क्रीडद्रमापादतलच्युतेन
लाक्षारसेनेव समुक्षितानि ॥ १३ ॥

न केवलं योजयति प्रियाभि-
श्चक्रान् प्रभाते सविता वियुक्तान् ।
अपि द्विरेफानरविन्दकोशाद्
विमोचितानंशुविधूतनिद्रात् ॥ १४ ॥

इति प्रजानामधिपो वचोभि-
र्वैतालिकानां गतसुप्तिरासीत् ।
प्रातः सरोजं कुमुदाद् गतानां
स्वैरलीनामिव राजहंसः ॥ १५ ॥

उत्थाय तल्पादुषसि क्षितीशो
निर्वर्त्य सन्ध्यानियमं समस्तम् ।
रथं समास्थाय रयादयासीत्
पुरीं विदेहेन्द्रभुजाभिगुप्ताम् ॥ १६ ॥

सार्धं वसिष्ठेन समं वधूभि-
स्तमागतं साकमनीकिनीभिः ।
प्रत्युज्जगाम प्रमदोत्तरङ्गः
पुरस्सरस्तत्त्वविदां नरेन्द्रः ॥ १७ ॥

प्राप्तौ चिराद्दर्शनजं प्रहर्षं
विदेहराजोत्तरकोसलेन्द्रौ ।
परस्परं तौ परिषस्वजाते
सदेहबन्धाविव मोक्षधर्मौ ॥ १८ ॥

अथार्घ्यपाद्यप्रमुखामशेषां
पूजां प्रणीतां सपुरोहितेन ।
विदेहभूमीपतिना वसिष्ठः
प्रत्यग्रहीद् ब्रह्मविदां वरिष्ठः ॥ १९ ॥

विदेहराजो निजराजधानीं
प्रावेशयत् प्राग्रसरं रघूणाम् ।
सतोरणालीं जलसिक्तराज-
पथां नभस्वत्प्रचलत्पताकाम् ॥ २० ॥

तत्रोपकार्यां विविधोपदाभिः
पूर्णां प्रदिष्टां मिथिलाधिपेन ।
वितानसंशोभितकायमानां
रघुप्रवीरः सुखमध्युवास ॥ २१ ॥

अधिष्ठितां ब्रह्मविदां समूहैः
सभां प्रभाते मिथिलेश्वरस्य ।

पुरोधसा गाधिभुवा च सार्कं
विवेश तिग्मांशुकुलप्रदीपः ॥ २२ ॥

मुनिद्वये विष्टरभाजि तस्मिन्
रघुप्रवीरस्तदनुज्ञयाऽऽरात् ।
तेन प्रदिष्टं क्षितिवल्लभेन
रत्नासनं भास्वरमध्यतिष्ठत् ॥ २३ ॥

महर्षिणा ब्रह्मभुवा रघूणां
वंशावलौ संसदि कीर्तितायाम् ।
विदेहराजः कथितात्मवंश-
क्रमो रघूणामृषभं बभाषे ॥ २४ ॥

भवत्सुतो भग्नपुरारिचापो
गृह्णातु सीताकरमेष रामः ।
अथोर्मिलापाणिमये नरेन्द्र !
गृह्णातु पुत्रस्तव लक्ष्मणोऽपि ॥ २५ ॥

इतीरितायां गिरि मैथिलेन
कुशध्वजो राघवमाबभाषे ।
दिशामि काञ्चिद् भरताय कन्या-
मन्यां कनिष्ठाय च लक्ष्मणस्य ॥ २६ ॥

इति प्रतिज्ञामुभयोर्निशम्य
प्रीतो बभाषे रघुनन्दनस्तौ ।
अद्यास्मि धन्योऽहमियान् भवद्भ्यां
प्रदर्शितो यन्मयि पक्षपातः ॥ २७ ॥

सम्बन्धतो या भविता भवद्भ्यां
कुलस्य भानोर्महती प्रतिष्ठा ।
नाभूदुदन्वत्खननाखिलस्व-
प्रदानगङ्गानयनादिभिः सा ॥ २८ ॥

इति ब्रुवन्तं मिथिलाबिडौजाः
सखायमूचे बलशासनस्य ।
न वक्तुमित्थं नरपाल! युक्तं
महाकुलीनस्य महीयसस्ते ॥ २९ ॥

सम्बन्धमिच्छन्ति समस्तभूपाः
साकं त्वया सत्कुलसम्भवेन ।
मया स लब्धो निधिरादियेत
न कैर्भजेत् कश्चन भाग्यतरस्तम् ॥ ३० ॥

विधाय गोदानविधिं सुतानां
श्वः प्रातरागत्य सबन्धुवर्गः ।
निर्वर्तयैषां विधिवद् विवाह-
महोत्सवं राजशिखामणे! त्वम् ॥ ३१ ॥

इत्थं वदन्तं मिथिलाधिराज-
मापृच्छ्य राजा स निजोपकार्याम् ।
भेजे पुरस्कृत्य गुरुं रघूणा-
मानन्दरत्नाकरमग्नचेताः ॥ ३२ ॥

गोदानकर्माकलयत् सुतानां
धराधिराजो धरणीसुरेभ्यः ।

वसूनि रत्नानि वराम्बराणि
दर्दौ गवां लक्षचतुष्टयं च ॥ ३३ ॥

करोल्लसत्कौतुकसूत्रबन्धाः
कालाञ्जनोल्लासितलोचनाब्जाः ।
शरत्तुषारांशुमयूखरेखा-
विपाण्डरान् क्षौमपटान् वसानाः ॥ ३४ ॥

काश्मीरजन्मागुरुगन्धसार-
कस्तूरिकापङ्कविलिप्तगात्राः ।
माणिक्यमुक्तागरुडाश्मवज्र-
वैदूर्यनीलोत्पलभूषिताङ्गाः ॥ ३५ ॥

कुरङ्गनाभीतिलकानुबन्ध-
तरङ्गितश्रीकविशालफालाः ।
निबद्धचूडामणयः सहार-
केयूरहस्ताभरणाङ्गुलीयाः ॥ ३६ ॥

नरेन्द्रपुत्रा निजदृष्टिसृष्टि-
फलं भजन्ति स्म मनोभवाभाः ।
आत्मानुबिम्बं मुकुरेषु दर्शं
दर्शं विवाहोचितचारुवेषाः ॥ ३७ ॥

( चक्कलकम् )

न भूषिता यावदमी कुमारा-
स्तावद् विदेहाधिपकन्यकानाम् ।

प्रसाधिकाभिः प्रतिकर्म कर्तु-
मन्तःपुरेऽभूयत सङ्गताभिः ॥ ३८ ॥

अभ्यज्य तैलेन सुगन्धिनाग्रे
सीताजनिष्ट स्नपिता वधूभिः ।
पतिव्रताभिः शुचिना जलेन
क्षोणीव वर्षासु घनावलीभिः ॥ ३९ ॥

स्नात्वा दुकूलं विशदं वसाना
सा प्राङ्मुखी भास्वररत्नपीठे ।
निवेशिता भूषयितुं वधूभिः
सपत्यपत्याभिरशोभतोच्चैः ॥ ४० ॥

तदङ्गसङ्गे सति भूषणानां
शोभाविशेषो भवितेति वध्वः ।
आसञ्जयामासुरनल्पशोभे
गात्रे तदीये किल भूषणानि ॥ ४१ ॥

अङ्गे तदीये हरितालगौरे
भवेदलक्ष्या तपनीयभूषा ।
इति स्त्रियस्ताः परभागभाभि-
रभूषयन् रत्नविभूषणैस्ताम् ॥ ४२ ॥

पित्रादरेण प्रहितं मणिं सा
चूडापदे राजसुता बभार ।
प्रदाहशक्तिप्रतिबन्धकत्वं
रामस्य यो यास्यति शोकवह्नेः ॥ ४३ ॥

फाले तदीये तिलकं प्रणीतं
कस्तूरिकापङ्कमयं कयाचित् ।
तदानतभ्रूरतिकान्तचापात्
समुत्पतन्ती गुलिकेव रेजे ॥ ४४ ॥

प्रसाधिका किञ्चन पक्ष्मलाक्ष्या
विलोचनं साञ्जनमाकलय्य ।
आदाय भूयोऽञ्जनमक्षमासीद्
विलोचनं ज्ञातुमनञ्जनं सा ॥ ४५ ॥

जले तपःस्फूर्तिभिरुद्भवानां
सारूप्यमिच्छन्नयनस्य तस्याः ।
नीलाब्जमासाद्य वतंसतां त-
त्सारूप्यरूपं भजति स्म भद्रम् ॥ ४६ ॥

चिन्तामणिच्छायमुषा निरस्त-
बालार्कभासा जितकौस्तुभेन ।
विराजमानं तरलेन हारं
काचित् सखी तत्कुचयोरकार्षीत् ॥ ४७ ॥

पदं रुचेर्दीव्यति नायकस्य
गाढानुरागस्य कुचद्वयं ते ।
इति ब्रवीति स्म सखी सहासं
रज्यत्कुचां तां तरलप्रभाभिः ॥ ४८ ॥

वधूमणेराकलितः कयाचित्
काञ्चीकलापोऽधिनितम्बबिम्बम् ।

नीलाश्मरश्मिच्छुरितो नितम्ब-
स्पर्शात् सरोमाञ्च इवाबभासे ॥ ४९ ॥

चकार काचिच्चरणारविन्द-
द्वन्द्वं तुलाकोटियुतं तदीयम् ।
समानवस्त्वन्तरदुर्विधत्वात्
तथापि तन्निस्तुलतां प्रपेदे ॥ ५० ॥

सखीजनैर्या निजरूपवेप-
विलोकनेनानिशमार्जिताभूत् ।
आत्मानमादर्शतले सभूष-
मालोक्य तां प्रीतिमवाप सीता ॥ ५१ ॥

तथापरासामपि कन्यकानां
निर्वर्तिताभ्यञ्जनमज्जनानाम् ।
आसञ्जितानि प्रमदाभिरासन्
गात्रेषु नानामणिभूषणानि ॥ ५२ ॥

विभूषणश्रेणिविराजिताभि-
स्ताभिर्धरित्रीदुहिता परीता ।
रसालवल्लीव बभौ लताभि-
र्मधौ प्रसूनावलिशालिनीभिः ॥ ५३ ॥

जलोक्षितासूभयपार्श्वदेश-
निखातरम्भाक्रमुकद्रुमासु ।
मरुच्चलच्चेलपताकिकासु
वीथीषु दीव्यन्मणितोरणासु ॥ ५४ ॥

पुरन्ध्रिवर्गैर्निबिडेष्वगार-
    द्वारेषु नीराजनपात्रहस्तैः ।
संपूर्णकुम्भासु सदीपिकासु
    प्रतोलिकापार्श्ववितर्दिकासु ॥ ५५ ॥

पक्षे वलक्षे दिवसे शुभंयो
    युक्ते तिथावुत्तरफल्गुनीभिः ।
मुहूर्तविद्भिर्विहिते च शुद्ध-
    जामित्रिके सन्निहिते मुहूर्ते ॥ ५६ ॥

निजादगारान्निरगाददभ्र-
    मभ्रं विभिन्दन् पटहस्वनेन ।
राजा सुतानां तरसा विवाहं
    निर्वर्तयिष्यन् मनुवंशदीपः ॥ ५७ ॥

(चक्कलकम्)

पुत्रैः कलत्रैश्च पुरोहितैश्च
    मित्रैस्तथा बन्धुजनैः परीतः ।
अलङ्कृतां तां पुरमीक्षमाणः
    स मैथिलस्यालयमाससाद ॥ ५८ ॥

स तत्र काश्चिन्निबिडा जनौघैः
    क्रमेण कक्ष्याः समतीत्य गच्छन् ।
चक्षूंषि मुष्णन्तमिवात्मभासा
    वैवाहिकं मण्डपमालुलोके ॥ ५९ ॥

प्रवालमुक्ताफलपद्मरागनीलाश्मराजीखचितस्थलीकम् ।
कर्पूरधूलीकृतभक्तिरेखा-
समुल्लसच्चन्दनपङ्कलेपम् ॥ ६० ॥

वितानीलाम्बरलम्बमान-
विशुद्धमुक्तास्तबकाभिरामम् ।
हिरण्मयैः स्फाटिकसालभञ्जी-
विराजितैः स्तम्भचयैरुपेतम् ॥ ६१ ॥

स्रुग्भिः स्रुवैः काञ्चनपालिकाभिः
कुशैः समिद्भिः कुसुमैरुपेतम् ।
युक्तं च गन्धाक्षतलाजधूप-
प्रदीपसर्पिर्मधुपर्कपात्रैः ॥ ६२ ॥

अधिष्ठितं श्रोत्रियधोरणीभिः
स तं समासाद्य सुतैः समेतः ।
जग्राह पूजां जनकप्रणीतां
मुदा सखा जम्भनिसूदनस्य ॥ ६३ ॥

(चक्कलकम्)

अरुन्धतीबन्धुमुखे समस्त-
ब्रह्मर्षिसङ्घे प्रथमोपविष्टे ।
अथोपविष्टे जनकद्वये च
रामः ससीतो निषसाद पीठे ॥ ६४ ॥

तत्राबभौ हाटकपीठवर्ती
रामो विदेहेन्द्रसुतासमेतः ।
पार्श्वस्फुरत्कल्पकवल्लरीक-
स्तमालशाखीव सुमेरुसानौ ॥ ६५ ॥

हुतं वसिष्ठो विधिवद् विवाहे
हुताशनं-साक्षिणमाकलय्य ।
व्रीडाजडान्योन्यकटाक्षमोक्षौ
संयोजयामास वधूवरौ तौ ॥ ६६ ॥

विदेहभूवासवजप्तकन्या-
प्रदानमन्त्रस्थितविष्णुशब्दः ।
रामे न भेजे किल गौणवृत्ति-
मर्थेष्वमुख्येषु हि तत्प्रवृत्तिः ॥ ६७ ॥

विभूषणं हेममयं ससूत्रं
धरासुतायाः स बबन्ध कण्ठे ।
दिनोदयो रश्मिनिबद्धमिन्द्र-
दिशो रवेर्बिम्बमिवोपकण्ठे ॥ ६८ ॥

करेण जग्राह करं तदीयं
रत्नाङ्गुलीयच्छविरञ्जितेन ।
रामो नलिन्या नलिनं प्रभाते
करेण भास्वानिव पाटलेन ॥ ६९ ॥

प्रदक्षिणप्रक्रमणानि वह्ने-
स्तन्वच्चकाशे मिथुनं तदुच्चैः ।

नीराजनासु भ्रमतः समन्तात्
क्षणाद्दृणं तस्य किलापनेतुम् ॥ ७० ॥

पदं न्यधत्ताश्मनि भक्तिरेखा-
विराजिते कान्तकरोद्धृतं सा ।
विडम्बयन्ती कमलां मुरारे-
रुरस्तटारोहणमाचरन्तीम् ॥ ७१ ॥

विभावसौ प्रज्वलिते समिद्भि-
र्मुमोच लाजावलिमुत्पलाक्षी ।
सधातुरागे चरमाद्रिसानौ
प्रभातवेलेव घटामुडूनाम् ॥ ७२ ॥

मामाश्रितानां पदमीदृशं स्या-
दिति प्रभावं प्रथयन्निव स्वम् ।
ध्रुवं विदेहेन्द्रभुवे खलूच्चैः-
स्थानस्थितं दर्शयति स्म रामः ॥ ७३ ॥

यां व्योम्नि पश्यन्ति नवान्यवध्वो
यत्नाद् विवाहे रमणैर्नियुक्ताः ।
पार्श्वे वसिष्ठस्य निषेदुषीं ता-
मरुन्धतीं सा सुखमालुलोके ॥ ७४ ॥

मधूकपुष्पग्रथितानि दूर्वा-
युक्तानि दामानि मिथोऽधिकण्ठम् ।
नर्मोक्तैर्बन्धुजनैर्नियुक्तौ
तौ दम्पती चिक्षिपतुः प्रहर्षात् ॥ ७५ ॥

स्फीतानि गीतानि तदुत्सवर्द्धि-
शंसीनि पङ्केरुहलोचनानाम् ।
वधूवरौ कर्णपुटैः पिबन्तौ
दोलाविहारं सुखमन्वभूताम् ॥ ७६ ॥

आर्द्राक्षतारोपणकैतवेन
जनस्तमानर्च वधूसनाथम् ।
निशाचराणां कदनाय भूमौ
कान्तं रमायाः कलितावतारम् ॥ ७७ ॥

अथोपयेमे प्रथमः सुमित्रा-
पुत्रः किलान्यां जनकस्य कन्याम् ।
तौ रामरामानुजयोः कनिष्ठौ
धन्ये कुमार्यौ च कुशध्वजस्य ॥ ७८ ॥

इत्थं विवाहविधिमात्मभुवां चतुर्णां
निर्वर्त्य दत्तमखिलं मिथिलाधिपेन ।
आदाय यौतकधनं विपुलं समं तै-
र्दारान्वितैर्दशरथः स्वपुरं प्रतस्थे ॥ ७९ ॥

यं सूनुं जनयाम्बभूव महितः श्रीलोकनाथः सुधीः
ख्यातं चक्रकविं सतीसमुदयैः संमानिताम्बाभिधा ।
सर्गोऽसौ मिथिलाधिराजतनुजापाणिग्रहे तन्महा-
काव्ये चारुणि पार्वतीपरिणयभ्रातर्यभूत् सप्तमः ॥ ८० ॥

इति जानकीपरिणये

**सप्तमः सर्गः ।**

---

अथ अष्टमः सर्गः ।

आदरादनुजगाम सबन्धु-
मैंथिलो दशरथं पथि यान्तम् ।
व्योमसीम्नि वलमानमिवाग्रे
गन्धवाहनिवहं घनसङ्घः ॥ १ ॥

बन्धुवत्सलतयाध्वानि दूरं
तं व्रजन्तमनुगम्य नरेन्द्रम् ।
मैथिलो निववृते तनयाभि-
र्वीक्षितोऽनुपदमश्रुमुखीभिः ॥ २ ॥

क्षोभयन् क्षितिपतेरथ सेना-
माजगाम पवनः प्रतिकूलः ।
यत्नमश्वनिवहस्य शताङ्गा-
कर्षणेषु विफलं विदधानः ॥ ३ ॥

तादृशप्रलयपावकनिर्य-
द्भीमधूममदभूमहरेण ।
धूसराणि रजसा समभूवन्
दिङ्मुखानि तरसा निखिलानि ॥ ४ ॥

उत्थितं करभकायनिकाय-
च्छायमुग्रनिजरूपमुदग्रम् ।
अम्बरे जलमुचां निकुरुम्बं
स्फारघोरतरघोषविशेषम् ॥ ५ ॥

अन्तरा प्रतिभयं परिवेषं
क्षीणदीधितिरलक्ष्यत भानुः ।
केतुनेव परुषेण समन्ताद्
वेष्टितः सरभसग्रसनाय ॥ ६ ॥

तर्पयन्तमवनीपतिमांसै-
र्वीक्ष्य भार्गवमिवागतमारात् ।
सङ्कुलं सरभसापतिताभिः
श्येनसंहतिभिरम्बरमासीत् ॥ ७ ॥

तिष्ठति स्म खलु यत्र विवस्वान्
दिङ्मुखं तदभिपूरितमुच्चैः ।
भैरवैर्झटिति फेरवयूथ-
क्रन्दितैः समभवत् प्लुतरूपैः ॥ ८ ॥

इत्थमुत्थितमुदीक्ष्य समन्ताद्
दुर्निमित्तशतमाकुलचित्तम् ।
पार्थिवं न विपदस्ति दुरन्ता
मुञ्च शोकमिति तं गुरुरूचे ॥ ९ ॥

अग्रतोऽथ विकटभ्रुकुटीकः
प्रादुरास धृतघोरशरासः ।
भार्गवः परुषरोषकठोरः
क्षत्रियक्षतिपटिष्ठकुठारः ॥ १० ॥

गर्जदर्जुनभुजावनराजि-
ध्वंसदावदहनीभवदोजाः ।

योऽलुनात् परशुना युधि वारान्
सन्ततिं क्षितिभुजामुपविंशान् ॥ ११ ॥

रेणुकावधभुवा दुरितानां
मार्जनाय किल यस्य कुठारः ।
भूभुजां गलगलद्रुधिराम्भो-
निर्झरेष्ववितरताप्लवनोऽभूत् ॥ १२ ॥

जन्मभूर्जगति यः पितृभक्तेः
साहसस्य परमस्य निधिर्यः ।
पात्रमिन्दुमहसां यशसां यो
विक्रमस्य च विहारगृहं यः ॥ १३ ॥

*सिन्धुबन्धुवलयेन परीतां
काश्यपाय दिशति स्म भुवं यः ।
किञ्च खण्डपरशोरुपकण्ठात्
प्राप चापनिगमं निखिलं यः ॥ १४ ॥

वल्कलं वपुषि बिभ्रदजिह्म-
ब्रह्मचर्यनिधिरुज्ज्वलतेजाः ।
क्षत्त्रगात्ररुधिरेण पितॄणां
तर्पणं कलयति स्म पुरा यः ॥ १५ ॥

स्कन्धसीम्नि परशुं शितधारं
दक्षिणेतरकरे च शरासम् ।

---

* सिन्धुबन्धूनां समुद्राणां वलयेन ।

आशुगं दधदवामकरेयः
    क्रूरताजितयुगान्तकृतान्तः ॥ १६ ॥
उज्झितं मघवता कुलिशं यत्-
    पक्षमात्रदलनं किल चक्रे ।
आयुधं दलयति स्म यदीयं
    क्रौञ्चभूधरमुदग्रतरं तम् ॥ १७ ॥
तं निरीक्ष्य तरसा मुनिमारा-
    दुग्रविग्रहमुदग्रकुठारम् ।
तस्य भूशतमखस्य दुरन्ता
    प्रादुरास किल चेतसि चिन्ता ॥ १८ ॥
यस्य निष्ठुरकुठारविलूना
    क्षत्रजातिरखिला बहुवारान् ।
न प्ररोहति मनागधुनापि
    भ्रूणहा क्व पुनरापतितोऽसौ ॥ १९ ॥
उद्धतः परशुपावकदग्ध-
    क्षत्रसन्ततिरमर्षभरेण ।
पापमेष कलयिष्यति किं वा
    शैशवाविरहितेषु सुतेषु ॥ २० ॥
चिन्तयन्तमिति भूपमपश्य-
    न्नर्घ्यमर्घ्यमिति तं कथयन्तम् ।
राममेव भृगुसूनुरयासी-
    दाहितेश्वरशरासनिरासम् ॥ २१ ॥

आगते सति मुनौ क्षितिपाल-
स्त्रासकम्पमभजन्न तु रामः ।
कम्पते क्षितिरुहः पवमाने
वाति तिष्ठति हि पूर्ववदद्रिः ॥ २२ ॥

सञ्चरन्तमिव सद्गुणराशिं
मूर्तिमन्तमिव कीर्त्तिपदार्थम् ।
अक्षिलक्षितमिवार्जवसारं
चेतनान्वितमिवाखिलधर्मम् ॥ २३ ॥

पश्यति स्म जमदग्निकुमारः
कोसलेन्द्रसुतमेकनिकेतम् ।
शौर्यधैर्यविनयप्रियवाद-
क्षान्तिशान्तिनयसत्यदयानाम् ॥ २४ ॥
(युग्मम्)

भीतिगन्धरहितं गतशङ्कं
मुक्तविक्रियमनाकुलचित्तम् ।
अब्रवीद् रघुपतिं यमदंष्ट्रा-
कारघोरपरशुर्भृगुसूनुः ॥ २५ ॥

क्षत्रडिम्भ! जरठो जनकस्ते
मुक्त एष निरपत्य इति प्राक् ।
सूदितो यदि तदैव कुतस्त्वं
तत् कुतो हरधनुर्दलनं वा ॥ २६ ॥

हेहयक्षितिभुजो भुजवंशान्
केवलं न खलु घोरतरोऽसौ ।

अञ्जसा क्षितिभुजामपि वंशान्
निर्बिभेद समरे परशुर्मे ॥ २७ ॥

अस्त्रमन्त्रमखिलं भवते यो
बालिशाय तरसोपदिदेश ।
लोकविप्रियकरं बत विश्वा-
मित्रमाहुरत एव जनास्तम् ॥ २८ ॥

यच्चिरादपरिशीलनतोऽभू-
न्निष्पतद्घुणगणव्रणरेणु ।
तस्य रुद्रधनुषो मथनात् ते
क्षत्रियार्भक! कियानवलेपः ॥ २९ ॥

एकविंशतिमहीपतिवंशो-
न्मूलनेन शमितां भुजकण्डूम् ।
उत्थितां पुनरिमां रघुवंश-
च्छेदनात् प्रशमितां कलयामि ॥ ३० ॥

ताटकाहरशरासुबाहु-
ध्वंसनात् समुदितं हृदये ते ।
अस्मदीयपरशुः स्वयमद्यो-
न्मूलयिष्यति रयादवलेपम् ॥ ३१ ॥

पौरुषोद्भटभुजेन मया चेद्
द्वन्द्वयुद्धमधुना कलयेथाः ।
क्षत्रदारक! यशो भवतः स्या-
दस्तु संयति जयोऽपजयो वा ॥ ३२ ॥

विस्रसौषधिबलेन पिता ते
रक्षितोऽजनि मदीयकुठारात् ।
ओषधिं नतिमयीं कलयंस्त्वं
प्राणरक्षणविधिं रचयास्मात् ॥ ३३ ॥

किं मया समरमाचरसि त्वं
किं तनोषि धनुरेतदधिज्यम् ।
किं करोषि शिरसा प्रणिपातं
तत् कुरु त्रिषु यदिष्टतमं ते ॥ ३४ ॥

एवमूचुषि मुनौ भृगुसूनौ
रोषशोणतरलोचनकोणे ।
राघवस्य हृदयं न जगाम
क्षोभमीषदपि सिन्धुगभीरम् ॥ ३५ ॥

सङ्गरे सति भवेद् द्विजहिंसा
कीर्त्तिहानिरहितप्रणिपाते ।
नात्र दोषकणिकेति स चापा-
रोपणे निहितधीर्निजगाद ॥ ३६ ॥

क्षत्त्रवंशदलनार्जुनबाहा-
खण्डनादि वदता निजशौर्यम् ।
रैणुकेय ! जननीवधशौर्यं
विस्मृतं कथमिदं भवताभूत् ॥ ३७ ॥

क्षिप्तमायुधमिदं पितृघाती-
त्यर्जुने सरभसं भवता चेत् ।

शस्त्रमुज्ज्वलतरं त्वयि तद्व-
न्मातृघातिनि कुतो न विसृष्टम् ॥ ३८ ॥

भूसुरोऽयमिति जातविशङ्का-
नप्रयुक्तविविधास्त्रसमूहान् ।
त्वद्वधात् क्षितिभुजो विनिवृत्तान्
का स्तुतिः कथय संहरतस्ते ॥ ३९ ॥

आजघान पितरं भवतो यः
स त्वयैव समरे निगृहीतः ।
मातरं निहतवान् खलु यस्ते
तस्य निग्रहमहं कलयामि ॥ ४० ॥

शक्तिमान् दलयति स्म कुमारः
क्रौञ्चमद्रिमिति मत्सरतस्त्वम् ।
ख्यातिमाप्तुमभिनः शकुनिं त-
त्तुल्यसंज्ञमपशक्तिरये किम् ॥ ४१ ॥

ब्राह्मणे त्वयि जिते सति शस्त्रैः
क्षत्रियस्य न यशो जगति स्यात् ।
शंस राम! समरे यशसो मे
का प्रसक्तिरजिते त्वयि दैवात् ॥ ४२ ॥

अग्रहीदिति वदन् रघुवीर-
स्तत्करान्मधुनिसूदनचापम् ।
तत्क्षणाद् भृगुपतिर्गततेजा-
श्चण्डभानुरुपरक्त इवासीत् ॥ ४३ ॥

दुर्निरीक्षतरतां प्रतिपेदे
राघवोऽधिगतभार्गवतेजाः ।
सायमग्निरिव भानुसकाशात्
सत्वरापतितनिर्भरधामा ॥ ४४ ॥

मुक्तदर्पभरमुज्झितयुद्धो-
त्साहमस्तमितभीषणरोषम् ।
क्षीणतेजसमुपागतदैन्यं
वीक्ष्य राममवदद् रघुवीरः ॥ ४५ ॥

आयुधानि विमुखानि रघूणां
ब्राह्मणेषु यदतस्तरसा ते ।
लुम्पतु त्रिदिववर्त्म गतिं वा
संहितो धनुषि सायक एषः ॥ ४६ ॥

शंसतीति रघुवंशवतंसे
व्याजहार जमदग्निकुमारः ।
अध्वरार्जितमनेन जहि त्वं
नाकलोकमिषुणा न गतिं मे ॥ ४७ ॥

दीनदीन इति शंसति तस्मि-
न्नुज्झितो दशरथस्य सुतेन ।
मार्गणो झटिति भार्गवताद्दक्-
स्वर्गमार्गविपुलार्गलमासीत् ॥ ४८ ॥

किं फलं प्रहरणग्रहणेन
ब्राह्मणस्य दुरहङ्क्रियया वा ।

शान्तिमान् भव समस्तजनेषु
त्वं दयां कलय गच्छ यथेच्छम् ॥ ४९ ॥

व्याहरन्निति ननाम स रामो
राममाप्तशममुज्झितदर्पम् ।
उद्धतेष्वनुचितः प्रणिपातो
युक्ततां व्रजति शान्तिमितेषु ॥ ५० ॥

राघवेण विहितानुमतिः सन्
भार्गवो द्रुतमवाप महेन्द्रम् ।
स्वं पुरं दशरथोऽपि सदारै-
र्दारकैरनुगतो भजति स्म ॥ ५१ ॥

तोरणावलिविराजितमम्भ-
स्सिक्तराजपथमुच्चपताकम् ।
तत् पुरं जनघनं परिपश्य-
न्नाससाद भवनं क्षितिपालः ॥ ५२ ॥

राघवश्च भरतश्च सुमित्रा-
नन्दनौ च पितरं प्रणिपत्य ।
शासनात् तदनु तस्य सदारा
भेजिरे निजनिजावसथानि ॥ ५३ ॥

मैथिलस्य च कुशध्वजनाम्नः
कन्यकाः क्षितिभुजोरुभयोस्ताः ।
लालनाभिरनिशं दयिताना-
मस्मरन् न जनकौ मनसापि ॥ ५४ ॥

रूपधेयमधुरास्तरुणिम्ना
भूषिता दशरथस्य कुमाराः ।
ताभिरुज्ज्वलतराभिरजस्रं
सङ्गताः सुखमभुञ्जत भोगान् ॥ ५५ ॥

क्रीडति स्म मणिधाम्नि कदाचि-
न्मन्दिरोपवनसीम्नि कदाचित् ।
केलिभूमिधरमूर्ध्नि कदाचित्
सीतया सह सुखेन स रामः ॥ ५६ ॥

तं विना क्षणमुवास न सीता
तां विना स च नरेन्द्रकुमारः ।
कौमुदी विरहिता हिमभासा
किं वसेद् विरहितः स तया वा ॥ ५७ ॥

भक्तिमान् गुरुषु बन्धुजनेषु
प्रीतिमांश्च कृपणेषु कृपावान् ।
रोषवान् प्रतिभटेषु रणेषू-
त्साहवान् समजनिष्ट स वीरः ॥ ५८ ॥

स स्मरन्नुपकृतिं लघुमेकां
नास्मरद् गुरुतरानपकारान् ।
ईरितासु परुषोक्तिषु रुष्टै-
राह नोत्तरमपि प्रतिभावान् ॥ ५९ ॥

राघवः प्रदिशति स्म धनौघं
भूरिशः खलु तथार्थिजनाय ।

सन्ततावपि न तस्य यथा स्याद्
दुर्गतिः प्रभवभूर्दुरितानाम् ॥ ६० ॥

तादृशेन भुजविक्रमभूम्ना
केवलं न जमदग्निकुमारम् ।
श्लाघनीयतरया पितृभक्त्या-
प्यत्यशेत रघुवंशवतंसः ॥ ६१ ॥

निष्ठुराक्षरमलीकमसारं
ग्राम्यमुद्धततरं कृपणं वा ।
उज्झितार्जवमधर्म्यमयुक्तं
व्याजहार न वचो रघुवीरः ॥ ६२ ॥

वीक्षणेन सदयेन सुधौघं
वर्षतेव वचसा मनसा च ।
प्रेमभूमभरितेन रघूणां
नायको निखिलचित्तमहार्षीत् ॥ ६३ ॥

राजसूनुषु चतुर्ष्वपि रामः
सम्मतोऽजनि जनस्य विशेषात् ।
एक एव हि विशिष्य पुमर्थे-
ष्वर्चितो भवति मोक्षपदार्थः ॥ ६४ ॥

जानकीपरिणयोत्सवशंसि-
ग्रन्थनिर्वहणसर्वधुरीणम् ।
हर्षितं समतनोत् कविचक्रं§
राघवः प्रवितरन् सदभीष्टम् ॥ ६५ ॥

---

§ कविचक्र कविसमूहम्, अथच प्रकृतकाव्यकर्तारं चक्राख्यं कविम् ।

इत्थं सद्गुणरञ्जिताखिलजनं गाम्भीर्यधैर्यक्षमा-
शौर्योत्साहविनीतिशान्तिकरुणाविश्राणनैकाश्रयम् ।
रामं सत्वरमन्ययैव चकमे विश्वंभराकन्यया
संयोक्तुं दिवसे शुभे दशरथस्तं यौवराज्यश्रिया ॥ ६६ ॥

यं सूनुं जनयाम्बभूव महितः श्रीलोकनाथः सुधीः
ख्यातं चक्रकविं सतीसमुदयैः सम्मानिताम्बाभिधा ।
यत्पुत्रो भुवि वेत्ति सामनिगमं श्रीरामचन्द्रोऽखिलं
काव्ये तस्य हि जानकीपरिणये सर्गोऽजनिष्टाष्टमः ॥६७॥

दृप्यन्मन्मथगाढकर्षणदलत्पर्वेक्षुचापक्षर-
त्सारस्फाररसोर्मिनिर्मितरणक्रीडा यदीया गिरः ।
यत्कीर्त्तिः शरदिन्दुसुन्दरमहःसन्दोहसन्देहदा
सोऽयं चक्रकविर्विभाति विनयी सौजन्यसम्पन्निधिः॥ ६८ ॥

गुरूणां चरणाम्भोजं यस्यां दिशि विराजते ।
तस्यै दिशे नमस्कुर्मः कायेन मनसा गिरा ॥ ६९ ॥

इति जानकीपरिणये

अष्टमः सर्गः ।

---

समाप्तश्चायं ग्रन्थः ।

शुभं भूयात् ।

---